NYAYARATHNAVALI-4.

# BHADHA GRANDHA

BY

Gadadhara Bhattacharya,

*With*

MANI AND DIDHITHI

OF

*Gangesopadhyaya and Raghunadha* swo

EDITED BY

*P. B. ANANTHA CHARIAR*

SANSKRIT PANDIT.

Printed and Published

*By the Proprietor Sri Sudarsana Press.*

CONJEEVERAM.

*By* *By*

न्यायरत्नावळी - ४

# बाधग्रन्थः ।

महामहोपाध्याय श्रीगदाधरभट्टाचार्य विरचितः,

श्रीगंगेशोपाध्याय रघुनाथशिरोमणि विरचिताभ्यां

मणिदीधितिभ्यां सह,

श्रीकांची प्रतिवादिभयंकरानन्ताचार्येण

परिशोधितः,

कांच्यां श्रीसुदर्शनमुद्राक्षरशालायाममुद्रयत ।

1904



*Price* Rs 0 -12- 0

श्रीरस्तु ।

# ॥ न्यायरत्नावली ॥

श्रीहयग्रीवायनमः ।

## ॥ तत्वचिन्तामणौ बाधग्रन्थः ॥

बाधो न साध्याभाववत्पक्षकत्वं, पक्षवृत्त्यभावप्रतियोगिसाध्यकत्वंवा , पक्षे साध्याभावज्ञानमात्रस्य प्रमात्वज्ञानं विना अधिकबलत्वाज्ञानेन बाधाभावादिति वक्ष्यते । अत एव साध्याभाववत्पक्षवृत्तित्वमपि न, असिद्धिसंकीर्णबाधाव्याप्तेश्च । किन्तु - साध्याभाववत्त्वप्रमाविषयपक्षकत्वम्, प्रमितसाध्याभाववत्पक्षकत्वम्,

---

## गदाधरीयम् ।

मूले- ( अधिकबलत्वाज्ञानइति ) अधिकबलत्वस्या ज्ञानं यस्मादिति व्युत्पत्त्याऽधिकबलत्वाभावइत्यर्थः । अधिकबलत्वंच प्रतिबन्धौपयिकनिश्चितप्रामाण्यकत्वरूपाविशेषणावच्छिन्नत्वं । " बाधाभावात "- बाधकत्वाभावात्, प्रतिबन्धकत्वाभावादितियावत । तथाच निरुक्तबाधविषयकत्वस्या प्रतिबन्धकज्ञानसाधारणतया न तस्य दोषत्वमिति भावः । ( साध्याभाववत्पक्षवृत्तित्वमिति ) साध्याभाववत्पक्षकत्वं साध्याभाववत्पक्षविषयक ज्ञानविषयत्वं, नतु तादृशपक्षवृत्तित्वं, अत स्ततोस्य भेदः ( साध्याभाव[वत्त्व]प्रमेति ) एतादृशबाधज्ञानस्य प्रमात्वविषयकतानियमेन प्रतिबन्धकताध्रौव्यादितिभावः । प्रमात्वंच न साध्याभाववद्विशेष्यकत्वं, पर्वतोह्रदश्च न वह्निमानित्यादिज्ञानविषयसाध्याभावमादाय पर्वतादिपक्षके बाधप्रसंगात । किन्तु साध्यमद्विशेष्यकत्वं । पक्षतावच्छेदकावच्छिन्नांशेसाध्याभाववत्त्वानवगाहनेविरोध्यविषयकत्वेन प्रतिबन्धकत्वे विवादात् तदंशे साध्याभाववत्त्वघटितं लक्षणमाह(प्रमितेति) प्रमितत्वं-स्वविशेष्यक प्रमाप्रकारत्वं । स्वं पक्षः । प्रमात्वं पूर्ववत् ।

[म] पक्षनिष्ठप्रमाविषयत्व प्रकाराभाव प्रतियोगिसाध्यकत्वंवेति विवक्षित

## दीधितिः ।

अतिरिक्तविषयतावादिमतेनाह ( पक्षेति ) पक्षः - साध्याभाव वानिति ज्ञाने पक्षनिष्ठविषयत्वस्य प्रकारः साध्याभाव इति लक्षणसमन्वयः । ( विवक्षितेति )

सिद्धान्तिमते विषयताया नप्रकारत्वं, अपितु ज्ञानस्यैव, अतः पक्षनिष्ठप्रमाविषयत्वप्रकारत्वस्या भावविशेषणतया निवेशनं विरुद्धम् ; नच - विशेष्यतारूपविषयतायां प्रकारतानिरूपकत्वसत्त्वा द्विषयतानिरूपितप्रकारतारूपस्य विषयत्वप्रकारत्वस्या भाववृत्तित्वा [न्न] विरोधइतिवाच्यं, - कार्यत्वकारणत्वयोरिव विशेष्यविशेषणविषयत्व यो निरूप्यनिरूपकभावसम्बन्धसत्त्वेपि कार्यतायाः कारणमित्याद्य व्यवहारेण तादृशनिरूप्यनिरूपकभावस्य षष्ठ्यर्थताविरहात् , षष्ठीत त्पुरुष व्युत्पन्नविषयताप्रकारशब्दे नोक्तार्थाप्रतिपादनात , स्वविषयक ज्ञानादौ विषयताया यादृशसम्बन्ध स्तादृशस्यैव षष्ठ्यर्थत्वा त्प्रकारता या स्तादृशसम्बन्धस्यच विषयतायां स्वविषयकत्वव्यवहारविरहेणासत्त्वा त्तथा विवक्षितु मशक्यत्वात् ; अत 'स्वप्रकारकत्वं विषयताया एव, नतु ज्ञानस्य, प्रकारताया विषयतानात्मकप्रतियोगित्वादिनिरूपितावच्छे दकतातुल्यावच्छेदकता विशेषरूपत्वा, ' दित्यतिरिक्तविषयतावाद्ये कदेशिमताभिप्रायकतया विषयताप्रकारत्व ,पर्यन्तानिवेशं संगमयति दीधितौ ( अतिरिक्तेति ) पक्षे साध्याभावः पक्षनिष्ठाभावप्रति योगि साध्यमित्यादिप्रमायां साध्याभावप्रकारकविषयतायाः पक्षेऽस त्त्वात् यादृशज्ञानमादायलक्षणसंगमनं तादृशज्ञानं दर्शयति ( पक्ष इति ) ( ज्ञानेपक्षनिष्ठ विषयत्वस्य प्रकारइति ) तादृशज्ञानी य्या या पक्षनिष्ठविषयता तन्निरूपितप्रकारताश्रय इत्यर्थः ।

[मि] विवेकेन साध्याभावप्रमैव दोषः । सा च प्रमात्वेन ज्ञाता, न स्वरूपसती, हेत्वाभासत्वात् । प्रमात्वज्ञानं विना अधिकबलत्वाभावेना दोषत्वात् । अप्रमायामपि प्रमात्वज्ञाने ऽनुमिति प्रतिबन्धाच्च ।

अथ साध्याभाववति पक्षे हेतोः सत्वज्ञाने व्यभिचारः, तद्

---

[दी] हेत्वादिविषयत्वेना प्रतिबन्धकत्वा दिति भावः । साध्याभावप्रमात्वग्रहे पक्षे साध्याभाववत्त्वग्रहस्या वश्यकत्वाभिप्रायेण

---

एतेन पक्षनिष्ठत्वादिकं नाभावादे र्विशेषणं, किन्तु विषयत्वादेः; प्रकारस्याभाव इति न षष्ठीतत्पुरुषः, किन्तु कर्मधारय इत्यादिकमपि स्फुटीकृतम् ।

" साध्याभावप्रमैवे " त्येवकारस्य पक्षादे र्दोषघटकत्वव्यवच्छेदपरता न सम्भवति, पक्षादिविषयकत्वस्य प्रतिबन्धकत्वोपयोगित्वात् । अतो हेतुतत्सम्बन्धमात्रव्यवच्छेदार्थकता माविष्कर्तुं तद्विषयकत्वस्य प्रतिबन्धकत्वानुपयोगित्वं तद्व्यवच्छेदे हेतु माह ( हेत्वादीति ) एवंच साध्याभावप्रमापदं साध्याभावप्रमाविषयपक्षकत्वादिरूपदर्शितपक्षांशे साध्याभावप्रमाविषयत्वादिरूपविशेषणविशिष्टपर मित्यवधेयम् ।

मूले ( साध्याभाववति पक्ष इति ) साध्याभाववत्त्वेन ज्ञायमाने पक्ष इत्यर्थः ।

ननु - साध्याभावप्रमाविषयपक्षकत्वादिरूपदर्शितबाधे पक्षांशे प्रमाविषयत्वमेव निविष्टं, नतु साध्याभाववत्त्व मिति उक्तज्ञान दशायां हेतुसाध्याभावयो स्सामानाधिकरण्यरूपव्यभिचारधियो ऽनावश्यकतेति कथ मय माक्षेप इत्याशंकां निराकरोति दीधितौ ( साध्याभावेति ) ( साध्याभाववत्त्वग्रहस्या वश्यकत्वाभिप्रायेणेति ) तद्वति तत्प्रकारकत्वरूपस्य तत्प्रमात्वस्य धर्मिणि तद्वत्त्वघटितत्वा

[ म ] ज्ञानेऽसिद्धिः, संशययोग्यत्वाभावेन पक्षत्वाभावा दाश्रयासिद्धिश्च।

नच पक्षभिन्ने व्यभिचारो दोषः, व्यर्थविशेषणत्वात् ; सर्वोप संहारप्रवृत्तव्याप्तेः साध्याभाववति साधनमित्यवगमादेव भंगात् ।

नचैवं सन्दिग्ध साध्यकदृष्टान्ते सन्दिग्धा नैकान्तिकत्व

---

[ दी ] साध्याभावस्य बाधत्वादिमतेन वा शंकते। ( अथेति)

---

दिति भावः । ननु - प्रमात्वघटकतया साध्याभाववत्त्वेन धर्मिणो भानेपि न व्यभिचारबुद्धे रावश्यकता, येन रूपेण हेतुमत्ताज्ञानं तन प्रकारेण हेतुमत्त्वप्रकारेण वा धर्मिणि साध्याभावज्ञानस्यैव व्यभि चारज्ञानत्वात ; दर्शितसाध्यव दविशेष्यकत्वरूप प्रमात्वप्रवेशे च साध्याभावबुद्धे रेवं नावश्यकत्व मित्यनुशया दाह दीधितौ ( साध्या भावस्येति ) पक्षनिष्ठस्येत्यादिः ।

मूले - " असिद्धिः " - पक्षधर्मताज्ञानरूपकारणविरहः । तथाच बाधबुद्धिदशाया मनुमितिविरोधिनो व्यभिचारज्ञानस्य पक्ष धर्मताज्ञानरूपकारणविरहस्य वावश्यं सत्त्वात् तत एवानुमित्यनु- त्पादे कृतं बाधस्य हेत्वाभासत्वेनेति भावः । संशययोग्यता - साधकबाधकमानाभावः, तदभावेन - तद्विघटकबाधकमानसत्त्वेन । एतेन संशययोग्यताविरहपक्षताविरहयो रभेदा द्धेतुहेतुमद्भावेनाभि- धान मसंगत मिति निरस्तम् । "आश्रयासिद्धिः" - पक्षधर्मता ज्ञानविषयधर्मिविशेषणतया ऽनुमितिप्रयोजकस्या सत्त्वम् । सिद्ध्य भावस्य पक्षतात्वमते एतद्दोषस्या किंचित्करतया पूर्वदोषस्यैवोद्धारमाशं- क्यनिराकरोति ( नचेति ) ( सर्वोपसंहारप्रवृत्तव्याप्ते रिति ) सकलहेतुमदन्तर्भावेन साध्यसत्त्वनिर्वाह्यव्याप्तेरित्यर्थः ( नचैवमिति ) " दृष्टान्ते " - पक्षभिन्ने । " सन्दिग्धा नैकान्तिकवत " - व्यभिचार संशयवत। साध्याभावांशे संशयरूपत्वेपि प्रतिबन्धकत्वादिति शेषः ।

[ म ] त्पक्षे व्यभिचारसंशया दनुमानमात्रोच्छेदइति पक्षे । साध्यसंशयो ऽनुमानांगमिति व्याप्तस्य पक्षधर्मताज्ञाना-

---

[ दी ] ( पक्ष इति ) व्याप्तौ निश्चितायां पक्षतत्समयोः साध्याभाव संशयो न दोषायेत्यर्थः ।

---

एतेन साध्याभावांशे निश्चयरूपमेव व्यभिचारज्ञानं प्रतिबन्धकमिति पक्षभिन्नत्वानन्तर्भावेपि नानुमान मात्रोच्छेदइति शंका निराकृता । "पक्षे"- पक्षान्तर्भावेण । सर्वत्र "व्यभिचारसंशयात"-व्यभिचारसंशयरूपप्रतिबन्ध कसत्वात् । "अनुमानमात्रोच्छेदः"-सन्दिग्धसाध्यकपक्षे ऽनुमिते रनुपप- त्तिः । कथंचिदनुमितिसम्भवेपि दुष्टहेतुजन्यत्वसंशयात् तत्रा प्रामाण्यसंशयात्तत्कार्यानुपपत्तिः ।

एत , च्छंकायां " पक्षे " इत्यादि यथाश्रुतमूलेनोद्धारो न संगच्छते , पक्षे साध्यसन्देहस्यानुमानांगतयापेक्षायां व्यभिचार ज्ञानसत्त्वेना नुपपत्ति तादवस्थ्यात ; परामर्शसत्त्वे व्यभिचारज्ञानस्य साक्षादनुमित्यविरोधितया ऽकिञ्चित्करत्वेपि तत्सत्त्वे बाधनिश्चय दशाया मनुमिते र्वारणाय बाधस्य हेत्वाभासताया आवश्यकत्वात् ; अत स्तद्व्याचष्टे दीधितौ ( पक्ष इतीति ) " व्याप्तौ निश्चितायां " मिति पूरणम् । पक्षे साध्यसन्देहस्या दोषत्वे पक्षभिन्नेपि तस्या दोषत्वं स्यादिति प्रतिबन्द्युद्धाराय " पक्ष " इत्यत्र पक्षसम मप्यन्तर्भावयति ( पक्षतत्समयोरिति ) तथाच पक्षे तत्समेच व्यभिचार संशयस्य यदि दोषत्वं तदापि व्याप्तेरनिश्चय एवेतिभावः । अविरोधिमात्रार्थक स्यांगपदस्य व्याख्यानं ' नदोषाये' ति ।

एवंच पक्षे व्यभिचारग्रहस्य व्याप्तिनिश्चय विघटनेनैव अनुमिति विरो धिता, पूर्वं व्याप्तिनिश्चयेच व्यभिचारसंशयेपि व्याप्तिस्मृत्या विशिष्टपराम

[ म ] दनुमित्युत्पादेन संशयनिवृत्तेः । अन्यथा विशेषदर्शनस्य संशयविरोधिता भज्येत ।

नच पक्षे साध्याभावं प्रतीत्य व्यभिचारज्ञान मित्युपजीव्यत्वा

---

[ दी ] " अनुमित्युत्पादेनेति " फलतोपि विरोधित्वप्रदर्शनाय । अत एव ज्यायः स्वरूपतो विरोधित्वं युक्त्या दृढयति ( अन्यथेति )

---

र्श संभवादनुमिति निष्प्रत्यूहैव, व्यभिचारनिश्चयस्यच साक्षादनुमिति विरोधितया साध्याभाववत्तया निश्चीयमाने पक्षे हेतुमत्ता निश्चये व्यभिचारनिश्चयादेव नानुमितिरितिं न बाधस्य हेत्वाभासतेति मूलकाराशयः । अनुमित्युत्पादेन संशयनिवृत्ति कथनंच शंकिताया अप्रामाण्यशंकाया निरासाय ।

अन्येतु – " पक्षे साध्यसंशयो नुमानांगं, " – अनुमितिपूर्वकाले विशेषा दर्शनसाहित्येन प्रात्यक्षिक सिद्धिविघटकतयानुमित्युपयोगि, नतु कारणम् , तथाच पक्षे साध्याभाव संशयरूप व्यभिचार ज्ञानस्यानु मितिविरोधित्वेपि तादृशसंशये विनष्ट एव परामर्शा दनुमिति र्भविष्यतीति नानुमानमात्रोच्छेद इत्यपि मूल व्याचक्षते ।

व्याप्यवत्तापरामर्शस्या प्युत्तरकाले संशय निवर्तकत्वसम्भवा दनुमित्युत्पादस्य संशयनिवर्तकत्वाभिधाना संगति माशंक्याह ( फलतोपीति ) तथा च फलद्वारापि संशयनिवर्तकत्व मस्तीति तत्प्रदर्शितम् । अपिकारपूरणेन स्वतोपि निवर्तकत्वं लभ्यतइतिभाव । " अत एव " – स्वतो विरोधित्वस्यापि तात्पर्य विषयत्वादेव । ' ज्यायः " – फलद्वारा विरोधित्व मपेक्ष्यज्यायः । " स्वरूपतो विरोधित्वं " - परामर्शस्य विशेषदर्शनविधया स्वतस्संशयविरोधित्वम् । ( युक्त्यादृढयत्यन्यथेतीति ) एवञ्चान्यथेति मूलस्य परामर्शस्य स्वतस्साध्य स्संशयानिवर्तकत्व इत्यर्थ ।

साध्याभावव द्धर्मिवृत्तित्वरूप व्यभिचारज्ञाने धर्मिणि साध्याभाव ग्रहो विशेषणतावच्छेदकप्रकारकज्ञानविधया पूर्वमपेक्ष्यत इत्यभिप्रायेण शंकते मूले ( पक्षे साध्याभाव म्प्रतीत्येति ) ज्ञानद्वयरूपे साध्या

[म] द्बाधः,- पृथक्पक्षे साध्याभावप्रतीति रेव हि साध्याभावहेत्वोः सम्बन्धोल्लेखिनीं त्येकवित्तिवेद्यत्वेन नोपजीव्यत्वं । अन्यथा बाध दशायां पक्षे हेतो रज्ञाना दसिद्धिरेव ।

नचोद्भावितव्यभिचारनिर्वाहायबाधोद्भावनमावश्यकमित्युपजीव्यत्वम्, व्यभिचारोद्भावने परं कथन्ता नावश्यकत्वात् । तत्त्वेवा तन्निर्वाह्यमेव दूषणं, क्लृप्तत्वात् । वह्नि रुष्णः कृतक इत्युद्भावना द्वह्नि रुष्ण इत्युद्भावने लाघव मिति बाधः । पृथगिति कश्चित, तन्न, पक्षे साध्याभावप्रमा स्वार्थानुमाने यदि न दोषः तदा परं प्रत्यपि न स्या दविशेषादिति तदुद्भावनस्य दूरनिरस्तत्वात् ।

अथोपनीतकांचनमयत्वविशिष्टवत्तानुमितेः सल्लिंगजन्याया आभा सत्वं हेत्वाभासाधीनं, नचानुमितेः पूर्वं तत्र व्यभिचारज्ञानं,

---

[दी] (हेत्वाभासाधीनमिति) नच हेत्वाभासस्यानुमित्याभासताप्रयोजकत्वे साध्यवति पक्षे लिंगाभासजन्याया अनुमिते रभासत्वापत्तिः, लिंगोपधाने

---

भाववान्पक्षः पक्षोहेतुमा नित्याकारकज्ञानरूपे च व्यभिचारग्रहे साध्याभावग्रहस्य न पूर्वमपेक्षेत्याशयेन " पक्ष " इत्यादिनोद्धारः । (साध्याभावहेत्वो सम्बन्धोल्लेखिनीति) हेतु सम्बन्धितया ज्ञायमाने साध्या भावविषयिणीत्यर्थः । एतेन क्वचिद्बाधग्रह परामर्शयो र्भेदेपि न क्षतिः ।

दीधितौ " हेत्वाभासस्य " दुष्टहेतुजन्यत्वस्य । " अनुमित्या भासता " - अनुमिति भ्रमत्वम् ।

मूले ( तत्र व्यभिचारज्ञानमिति ) धूमादिरूपहेतौ कांचनमयत्वा वच्छिन्न वह्न्य भाववद्वृत्तित्व ज्ञानमित्यर्थः ।

एतादृश ज्ञान निराकरणंच अनुमित्यौपयिकव्यापकतानवच्छेद केना प्युनीततद्रूपेण साध्यानुमितौ तद्रूपावच्छिन्न साध्याभाववद्वृत्ति

[म] विशिष्टस्याप्रसिद्ध्या तदभावस्या ज्ञानात ; अत एव पक्षासिद्धि रपि न; अतः कांचनमयवह्न्यभावरूपा द्वाधा दनुमानाभासत्वं, व्यधिकरण प्रकारावच्छिन्न प्रतियोगिकं श्चाभाव इति चेन्न; - वस्तुतो व्यभिचार स्यापि तत्र सत्त्वात् । ज्ञानं च तस्य बाधस्येवानुमित्यनन्तर मेव ।

---

[दी] तथात्वस्येष्टत्वात् । "पक्षासिद्धि"रित्यस्य बाधकमाननिबन्धनेत्यादिः।

---

त्वमपि साक्षाद्विरोधितया दोष इत्यभ्युपेत्यानुमितेः पूर्वं तदज्ञाने न तस्य हेत्वाभासते त्यभिमानेन । अनुमितिपूर्वमज्ञानं बाध बुद्धि साधारणतया ऽ किंचित्करमि त्यभिसन्धाया भिमान न्निराकृत्य एतन्मूलं दूषयिष्यति ( विशिष्टस्या प्रसिद्ध्येति ) अनुमिता वेव यत्र कांचनमयत्वेन वह्निभानं तत्र कांचनमयत्व विशिष्टवह्नेः पूर्वमज्ञाने प्रतियोगितावच्छेदक विशिष्ट प्रतियोगिज्ञानाभावेन व्यभि- चारघटकाभावस्य प्राक् ज्ञानासम्भवात् भ्रमात्मक प्रतियोगिता वच्छेदक विशिष्टप्रतियोगिज्ञानादेव व्यधिकरण धर्मावच्छिन्नाभावबुद्धिः, सच भ्रमो विशेष दर्शन माहार्य एवेत्याशयः । "अतएव"-तादृशाभावस्य पूर्वमज्ञानादेव । " न पक्षा सिद्धिः ) - पक्षता विरहोने त्यर्थः ।

सिद्ध्यभावरूप पक्षताविरहस्या प्रसक्ते स्साध्याभावज्ञानस्य तादृश पक्षता नुपपादकत्वाच्च साधकबाधकमानाभावरूप पक्षता विरह प्रसंजकं पूरयति दीधितौ ( पक्षासिद्धि रित्यस्येति )

विशिष्टप्रतियोग्यप्रसिद्धावपि नाभावाप्रसिद्धिरित्याशयेनाह मूले ( व्यधिकरणेति ) व्यभिचारस्य कांचनमयत्वावच्छिन्न वह्न्यभावव द्वृत्तित्वरूपस्य कदाचि दप्यज्ञाने व्यभिचारस्य न वास्तवत्वमत आह ( ज्ञानं च तस्येति ) अनुमितेः पूर्व मज्ञानेन यदि न हेत्वाभासता तदा [तादृश]बाधस्यापि सा न स्या दिति प्रतिबन्दिसूचनायाह ( बा- धस्येवेति ) कांचनमयत्वावच्छिन्न वह्न्यभावरूप भवन्मतासिद्धभ्रमत्व

[म] द्बाधः,- पृथक्पक्षे साध्याभावप्रतीति रेव हि साध्याभावहेत्वोः सम्बन्धोल्लेखिनी त्येकवित्तिवेद्यत्वेन नोपजीव्यत्वं । अन्यथा बाध दशायां पक्षे हेतो रज्ञाना दसिद्धिरेव ।

नचोद्भावितव्यभिचारनिर्वाहायबाधोद्भावनमावश्यकमित्युपजीव्यत्वम्, व्यभिचारोद्भावने परं कथन्ता नावश्यकत्वात् । तत्त्वेवा तन्निर्वाह्यमेव दूषणं, क्लृप्तत्वात् । वह्नि रुष्णः कृतक इत्युद्भावना द्वह्नि रुष्ण इत्युद्भावने लाघव मिति बाधः । पृथगिति कश्चित, तन्न, पक्षे साध्याभावप्रमा स्वार्थानुमाने यदि न दोषः तदा परं प्रत्यपि न स्या दविशेषादिति तदुद्भावनस्य दूरनिरस्तत्वात् ।

अथोपनीतकांचनमयत्वविशिष्टवत्तानुमितेः सल्लिंगजन्याया आभा सत्वं हेत्वाभासाधीनं, नचानुमितेः पूर्वं तत्र व्यभिचारज्ञानं,

---

[दी] (हेत्वाभासाधीनमिति) नच हेत्वाभासस्यानुमित्याभासताप्रयोजकत्वे साध्यवति पक्षे लिंगाभासजन्याया अनुमिते रभासत्वापत्तिः, लिंगोपधाने

---

भाववान्पक्षः पक्षोहेतुमा नित्याकारकज्ञानरूपे च व्यभिचारग्रहे साध्याभावग्रहस्य न पूर्वमपेक्षेत्याशयेन " पक्ष " इत्यादिनोद्धारः । (साध्याभावहेत्वो सम्बन्धोल्लेखिनीति) हेतु सम्बन्धितया ज्ञायमाने साध्या भावविषयिणीत्यर्थः । एतेन क्वचिद्बाधग्रह परामर्शयो र्भेदेपि न क्षतिः ।

दीधितौ " हेत्वाभासस्य " दुष्टहेतुजन्यत्वस्य । " अनुमित्या भासता " - अनुमिति भ्रमत्वम् ।

मूले ( तत्र व्यभिचारज्ञानमिति ) धूमादिरूपहेतौ कांचनमयत्वा वच्छिन्न वह्न्य भाववद्वृत्तित्व ज्ञानमित्यर्थः ।

एतादृश ज्ञान निराकरणंच अनुमित्यौपयिकव्यापकतानवच्छेद केना प्युनीततद्रूपेण साध्यानुमितौ तद्रूपावच्छिन्न साध्याभाववद्वृत्ति

[ म ] नचानुमिते र्विषयाभावाधीन मप्रमात्वं? किन्तु हेत्वाभासाधीनं; यस्य हि ज्ञान मनुमितिप्रतिबन्धकं स हेत्वाभासः, नच साध्याभावो ज्ञातः प्रतिबन्धक इति न स हेत्वाभासः ।

---

[ दी ] ( नच साध्याभाव इति ) अनुमितेः पूर्वं विशिष्टस्या प्रसिद्ध्या तदभावस्या ज्ञाना दिति भवतैवोक्तत्वा दिति भावः ।

---

उक्तस्थले पक्षनिष्ठस्य कांचनमयत्वावच्छिन्न वह्न्यभावस्या नुमित्या भासताप्रयोजकत्वे ऽप्यनुमित्याभासताया हेत्वाभासाधीनत्वनियमो न सिद्ध्यतीति नोक्तयुक्त्या बाधस्य हेत्वाभासतासिद्धि रित्याह मूले ( नचेति ) अप्रमात्वं भवतोच्यत इति शेषः । " नच साध्याभाव " इत्यनन्तरं प्रकृत इति पूरणीयम् । " प्रतिबन्ध क " इत्यनन्तरं भवितु मर्हतीति ।

अत्र कुत इत्याकांक्षाया माह दीधितौ ( अनुमितेः पूर्वमिति ) यद्यप्यनुमितेः पूर्वं साध्यज्ञानासम्भवेऽप्यन्यदा विशिष्टसाध्यज्ञानेनाभाव ज्ञानसम्भवात्तस्या नुमितिविरोधितया दर्शितबाधस्य हेत्वाभासत्वसम्भ वः ; तथाप्यनुमितेः पूर्वं व्यभिचारज्ञानासम्भवेन प्रकृते व्यभिचारस्य हेत्वाभासत्वासम्भवइति बाधस्य हेत्वाभासत्वं व्यवस्थापयता 'अथे' त्यादिनाभिहितं, अतस्तदनुसारेणैव तदभिहितम् । अतएवोक्तं ' भव तैवोक्तत्वा ' दिति । वस्तुतो यदा बाधग्रह स्तदा हेतुमत्ताज्ञान सत्त्वे व्यभिचारज्ञानस्यावश्यकतया बाधबुद्धेः प्रथक्प्रतिबन्धकत्व नास्ती त्यनुमिते राभासत्वं हेत्वाभासाधीनमिति नियमबलेनापि बाधस्य हेत्वा भासत्वं दुरुपपादमित्येव मूलकाराशयः । अनुमित्यात्मकविशिष्ट साध्यज्ञानोत्तरं तदभावज्ञानसम्भवेपि तज्ज्ञान पूर्वोत्पन्नायामनुमितौ अप्रतिबन्धकत्वा दनुमित्यन्तरानुत्पादस्यच पक्षे हेतुमत्ताज्ञानसत्त्वे तदा त्मकव्यभिचारज्ञानादेव निर्वाहा न्नतदभावस्य हेत्वाभासतेति भावः ।

[ म ] वस्तुतस्तु उपनीतस्यानुमितौ भाने मानाभावः । प्रत्यभिज्ञादौ च प्रतीतिबलेनैव तत्कल्पनम् । अन्यथा पूर्वोपस्थितसकलपदार्थभाने यथार्थानुमित्युच्छेदः ।

अपि चैवं परार्थानुमाने प्युपनीतभाने बाधितो ऽर्थ उपनीतोयं मम भात इत्युद्भावना देव विजयेत वादी ।

उद्देश्यानुमिते रप्रतिबन्धा न्न तत्र बाधो दोष इति चेत् ? तुल्यं स्वार्थानुमाने ऽपि ।

---

एतेनानुत्पन्नाया मेवानुमितौ विशिष्टसाध्यविषयक मानसादिज्ञान सम्भवेन विशिष्टसाध्याभावज्ञानोत्पत्तावपि नक्षतिः ; व्यभिचारर्धा सत्त्वा देवानुमित्यनुत्पादनिर्वाह बाधस्य विरोधित्वान्तरकल्पनाया अनावश्यकत्वादितिभावः ।

तद्रूपावच्छिन्न व्यभिचारस्य तद्रूपावच्छिन्न व्यापकता ग्रहाधीनानुमितावेव विरोधितया उपनीतधर्म विशिष्टसाध्यानु मितौ काञ्चनमयत्वावच्छिन्नाभाववद्वृत्तित्वरूप व्यभिचारो ऽकिञ्चि त्करइति कथञ्चि द्विशिष्टसाध्यज्ञानाधीनबाधग्रहदशाया मुक्तानुमि ते र्वारणाय बाधस्य हेत्वाभासत्वमावश्यकमिति अनुशयादनुमिता वुपनीतस्यैव भानं दूषयति मूले ( वस्तुतस्त्विति ) अनुमितौ उपनीतभाने बाधकमप्याह ( अन्यथेति ) ( यथार्थानुमित्युच्छेद इति ) भ्रमभिन्नानुमित्युच्छेदइत्यर्थः । ननूपनीतस्य सकलपदार्थस्य भाने तत्तत्पदार्थ बाधनिश्चयाभावस्य सहकारितया तादृशसहकारिसत्त्वे भ्रमत्वमिष्टमेव, तदसत्त्वेतादृशकारणविरहादेव नभ्रमत्वमित्यत आह(अपि चेति ) ( इत्युद्भावनादिति ) मध्यस्थस्येत्यादिः । अन्यथा वादिप्रतिवादिनोः परोपन्यस्तसाध्यानुमित्यजनना दसंगतेः ( नतत्र बाधोदोषइति ) यत्र यत्सिद्धिरनुद्देश्या तत्र तद्धानविरोधी प्रकृते नदोषइति तदुद्भावना न्नवादिविजय इत्यर्थः ।( तुल्यं स्वार्थानुमानेपीति

[म] अत एव यत्र सामान्यतो दृष्टानुमान मेतेतरबाधसहायं विशेषानु मापकं, तत्र बाधकाना माभासत्वे तत्प्रयुक्त सामान्यतो दृष्टस्या प्याभासत्व मिति बाधस्यासांकर्यात् ।

नच यदि विशेषविप्रतिपत्तौ सामान्यस्य प्रतिज्ञा, तदा अर्थान्तरं; सामान्यविप्रतिपत्तौतु नेतरत्र बाधकापेक्षेति वाच्यं;- स्वार्थानुमान एवैवं बाधासंकरस्योक्तत्वात् । इत्यपास्तं, अनुमित्य प्रति-बन्धेन तत्र बाधस्या दोषत्वात् । ननु पक्षे साध्याभावग्रहवत्साध्याभाव

---

प्रकृतहेत्वधीनं यत्र यदवगाहित्वं तत्र तदवगाहना विरोधिनः कांचनमय त्वादिना वह्न्याद्यभावस्य न प्रकृतहेतुदोषत्वमिति प्रकृतहेतो रदुष्टतयानु मिते रप्रमात्वानुपपत्तिर्भवतामपीत्यर्थः । " इतरबाधसहायं "- इतरबाध ग्रहसहित । " विशेषानुमापकं " - अगृहीतबाधस्य विशेषस्या नुमापकं । "बाधकानां"-इतरबाधग्राहकानां । "आभासत्वे"-अप्रमाणत्वे, यस्यबाधो गृहीतस्तस्य वस्तुतोबाधितत्वइतियावत् । (तत्प्रयुक्तमिति) परिशिष्यमाणविशेषबाधप्रयुक्तमित्यर्थः । " आभासत्वं "- अप्रमा जनकत्वं । ( अनुमित्यप्रतिबन्धेनेति ) स्वरूपसतोबाधस्याप्रति बन्धकत्वात् ज्ञानेच विशेषानुमापकताया एवानुपपत्तेरितिभावः । " बाधस्य "- विशेषबाधस्य ( अदोषत्वादिति ) तथाच न इत स्सामान्यतो दृष्टानुमानस्या प्रमाजनकत्वनिर्वाहइति भावः ।

यद्यपि तादृशबाधावतारस्य कदाचिद्विशेषानुमित्यनुत्पादप्रयो जकतया तस्य हेतुदोषत्वं यत्र तदनवतार स्तत्रत्याया विशेषानु मिते राभासताप्रयोजकत्वं चानपत्वादमेव, तथापि कदाचिदनुमित्यनु त्पादप्रयोजकज्ञानविषयत्वसम्भवे ततएव स्वतन्त्रहेत्वाभासतानिर्वाहे अनुमित्याभासता प्रयोजकत्वाभिधान मनुपपन्नं; विशेषानुमिति विरोधितया व्यभिचाराद्यसंकीर्णहेत्वाभासता च ' पक्षधर्मता

[म] व्याप्यग्रहोऽपि दूषको विरोधित्वा विशेषात । तथा च साध्या भावसम्बन्धो व्यभिचारः । साध्याभावव्याप्यसामानाधिकरण्य बाधः । साध्याभाव व्याप्यच वह्नित्वादिक मेवेति चेन्न ;- पक्षेहि साध्या भावे ज्ञायमाने ज्ञातेवा यदि साध्याभावव्याप्यसामानाधिकरण्य बुद्धि स्तदा व्यभिचार एव । अथ पक्षे साध्याभावबुद्धिं विनैव स, त र्हि हेतुसाध्याभावव्याप्ययो रगृह्यमाणविशेषयोः सत्प्रतिपक्षत्व । अथ तुल्यबलेन सत्प्रतिपक्षो ऽधिक बलेन बाधइति चेन्न;- गम कतौपयिकरूपसाकल्य हि बलं, तच्च द्वयोर्ज्ञात मिति कथं न सत्प्रतिपक्षत्व ? गमकताबहिर्भूतच न बलम् ।

---

बलेने " त्यादिना सिद्धान्तयिष्यत एवेति तात्पर्यम् । " दूषकः "- अनुमितिप्रतिबन्धकः ( विरोधित्वाविशेषा दिति ) साध्याभावस्येव त- द्व्याप्यस्यापि साध्यविरोधित्वा दित्यर्थ. ( साध्याभावसम्बन्ध इति ) हेतो रित्यादि. । हेतुमत्तया ज्ञायमाने पक्षे साध्याभाववत्त्व मि- त्यर्थः । " व्यभिचार. " - व्यभिचारग्रहविधया दूषणं । भवतीति शेषः ( साध्याभावव्याप्यसामानाधिकरण्य मिति ) तस्येत्यादिः । हेतुमत्तया ज्ञायमानेपि पक्षे साध्याभावव्याप्यवत्त्व मित्यर्थः । "बाधः" - बाधविधयैव दूषणं । तस्य व्यभिचारानात्मकत्वा दिति भावः ( वह्नि त्वादिक मेवेति ) वह्नि रनुष्ण इत्यादौ बाधस्थल इति शेषः । " व्यभिचार एव " - व्यभिचारग्रह एव । अनुमितिविरोधीति शेषः ( तुल्यबलेनेति ) उभयत्र बलपदं बलज्ञानपरम् । तथा च यत्रो ष्णत्वादिसाधकवह्नित्वादे रधिकबलत्वज्ञानं तत्र सत्प्रतिपक्षता विरहेण बाधस्या साकर्य मिति भावः । " तच्च " - व्याप्तिपक्षधर्म तात्मकं गमकतौपयिकरूपं च ( द्वयो र्ज्ञातमिति ) साध्याभावसा- धकवह्नित्वादे रिव प्रकृतहेतो रपि ज्ञातम् । अन्यथा कारणविरहा देव अनुमित्यनुत्पादनिर्वाहे बाधस्य हेत्वाभासत्वासिद्धे रित्यर्थः । " गमकताबहिर्भूतम् " - गमकतानौपयिकम् ।

[ म ] अथ साध्याभावव्याप्यबुद्धे रनन्यथासिद्धत्वं बलं ? तदा ततः साधनवति पक्षे साध्याभावानुमिता वनैकान्तिकत्वमेव । पक्षे साध्याभावग्रहवदिति यदुक्तं, तदप्यसिद्धं, तस्यदोषत्वानभ्युपगमाम् । अन्यथा हेत्वाभासान्तरतापत्तेः,

---

साध्यव्याप्यवत्ताबुद्धेः प्रमात्वं गमकतानौपयिक मपि सत्प्रतिपक्षविघटकं बलं, विरोधिव्याप्यवत्ताबुद्धौ तद्व्याप्यवत्ताबुद्धिप्रमात्वनिश्चयस्योत्तेजकत्वोपगमा, दिति - साध्याभावव्याप्यवत्ताज्ञाने प्रमात्वनिश्चयदशायां सत्प्रतिपक्षताविरहेण बाधस्यैव दोषत्वम् । बाधश्च प्रमितसाध्याभावव्याप्यवत्पक्षकत्वम् । नचोभयत्र प्रामाण्याग्रहदशायां यदनुमितिप्रतिबन्धकं तत एव तादृशबाधग्रहदशाया मनुमित्यनुत्पादनिर्वाहेण तादृशबाधबुद्धेः प्रतिबन्धकत्वान्तर मप्रामाणिकमिति वाच्यम् ; तादृशप्रतिबन्धके प्रकृतपरामर्शप्रमात्वग्रहस्योत्तेजकतयो भयत्र प्रामाण्यग्रहदशाया मनुमिते र्वारणाय प्रतिबन्धकत्वान्तरकल्पनाया आवश्यकत्वादिति शंकते ( अथेति ) " अनन्यथा सिद्धत्वम् " - प्रमात्वम् । " ततः " - साध्याभावबुद्धितः ( साध्याभावानुमिताविति ) बाधकविरहेणेति शेषः । " अनैकान्तिकत्वमेव " - व्यभिचारज्ञान मेव । अनुमितिं विरुध्यादिति शेषः ।

इद मापततः , तादृशसाध्याभावानुमित्युत्पादकाले साध्यानुमितेर्व्यभिचारज्ञानेनावारणात ; किन्तु एकत्र प्रामाण्यग्रहस्थले अन्यत्राप्रामाण्यग्रहोत्पत्त्यैव अनुमित्यभ्युपगमेनो क्तप्रामाण्योत्तेजकताया अनुपगमात , उभयत्र प्रामाण्यग्रहतदग्रहस्थलयो रप्राण्यज्ञानानास्कन्दितविरोधि व्याप्यवत्ताज्ञान प्रतिबन्धकतयैवोपपत्तेः प्रतिबन्धकत्वान्तरं निर्युक्तिकमित्येवदूषणम् । ( इति यदुक्तमिति ) इत्यनेन दृष्टान्तविधया यत्साध्याभावज्ञानस्य स्वातन्त्र्येण दूषकत्व मुक्तमित्यर्थः । ( हेत्वाभासान्तरतापत्तेरिति ) पक्षनिष्ठसाध्याभाव [ज्ञान]मात्रस्य व्य-

[ म ] अथ हेतुतः साध्यसिद्धिसम्भावनायां व्यभिचारासिद्धिः, बाधेन हेतो रसाधकत्वे सिद्धे व्यभिचारसिद्धि रित्युपजीव्यत्वाद्बाधः पृथक् ; अन्यथा हेतो रसाधकत्वे सिद्धे साध्यसिद्धिसम्भावनाविरहा द्व्यभिचारासिद्धिः, तस्यां च सत्यां हेतो रसाधकत्वधीरित्यन्योन्याश्रय इति चेन्न ; - साध्यसिद्ध्युन्मुखहेतुज्ञानस्य प्रमितसाध्याभाव सह चरित हेतुविषयत्वेन व्यभिचारज्ञानतया दूषकत्वात् । तथापि व्यभिचारे साध्याभावप्रमातन्त्रं, तां विना तदभावा, दिति- सैव दोषइति चेत् ? सत्यं, किन्तु साध्याभावप्रमा व्यभिचारज्ञानत्वेन दूषिका, क्लृप्तत्वात् ; न स्वतन्त्रा । अत एव पक्षे साध्याभावज्ञानत्वेन प्रति बन्धकत्वं, नतु साध्याभावसमानाधिकरणसाधनज्ञानत्वेनेति प्रत्युक्तं; तस्य लघुत्वे प्यक्लृप्तत्वात् ! अप्रत्यक्षादौ प्रमामात्रं प्रति स्वातन्त्र्येण बाधो दोषत्वेन क्लृप्त इत्यनुमितावपि स एव दोषइति चेन्न ; - अन्यत्र तथा दूषकत्वाकल्पनात् ।

---

भिचारानात्मकतया बाधत्वस्यापि तत्रानुपगमेन क्लृप्तेऽनन्तर्भावादिति भावः ( हेतुतस्साध्यसिद्धि सम्भावनायामिति ) हेतोस्साध्यसाधक प्रमाविषयत्व सम्भावनायामित्यर्थः ( व्यभिचारासिद्धिरिति ) तादृश प्रमाविषयत्वस्या व्यभिचारनियतत्वा दितिभावः । व्यभिचारा देवासाधकत्वसिद्ध्यभ्युपगमे दोषमाह ( अन्यथेति ) बाधसिद्धिरेव व्यभिचारासिद्धिरिति नोपजीव्योपजीवकभावइति दूषयति ( नेति ) ( सैवदोषइति ) सा तत्वेनैव लाघवा त्प्रतिबन्धिका, नतु व्यभिचारज्ञानतया, व्यभिचारस्य गुरुशरीरत्वादित्यर्थः । पक्षा तिरिक्ते हेतुसाध्याभाववत्त्वग्रहदशाया मनुमितिवारणाय व्यभिचार धियः प्रतिबन्धकताया आवश्यकत्वा द्गौरवमकिञ्चित्करं, साध्याभाव प्रमायाः प्रतिबन्धकत्वान्तरकल्पन एव च गौरवमिति दूषयति ( सत्यमिति ) साध्याभाव प्रमा प्रतिबन्धिकेत्यादिः । ( अन्यत्र तथा दूषकत्वाकल्पनादिति ) प्रत्यक्षादौ साध्याभाववत्पक्षकत्वपर्यन्तज्ञानस्य

[ म ] उच्यते, पक्षे साध्याभावनिश्चयः साध्याभावज्ञानप्रमात्वनिश्चयात, ज्ञानमात्रा दर्थनिश्चये प्रामाण्यग्रहवैयर्थ्यं; भ्रमत्वेन ज्ञाता दर्थनिश्चय प्रसंगाच्च । तथा चोपजीव्यत्वेना धिकबलत्वेनवा पक्षे साध्याभावज्ञानस्य प्रमात्वनिश्चये सव्यभिचारो

---

[दी] (तथा चेत्यादि) "अधिकबलत्वेन"-अधिकबलरूपत्वेन, अपेक्षणीयः "व्यभिचारः" - व्यभिचारनिश्चयः,

---

प्रतिबन्धकत्वाकल्पना दित्यर्थः । तथाचानुमितौ तज्ज्ञानप्रतिबन्धकताया मुक्तयुक्त्यनवकाशा द्धेतुवृत्तित्वेपि तस्य हेत्वाभासत्व न्नास्तीति भावः (पक्षे साध्याभावनिश्चय इति) साध्याभावज्ञाने प्रामाण्यसंशयोत्तरं तत्र प्रामाण्यनिश्चयंविना न साध्याभावनिश्चयः, तत्संशयसामग्रयनिवृत्तेरिति स प्रमात्वनिश्चयाधीनः; एव म्प्रमात्वनिश्चयंविना अप्रामाण्यसंशययोग्यतया कथंचि दुत्पन्नोपि निश्चयो न निश्चयकार्यकारी, अत स्तस्य निश्चयकार्यकारित्वमपि प्रमात्वनिश्चयाधीन मित्यर्थः (ज्ञानमात्रा दर्थनिश्चय इति) प्रमात्वनिश्चय निरपेक्षा ज्ज्ञानहेतोः प्रामाण्यसंशयस्थले प्यर्थनिश्चये तादृशज्ञानाच्च निश्चयकार्येभ्युपगते । "प्रामाण्य ग्रह वैयर्थ्यं,"-तदुपायविचारवैयर्थ्यं । "अर्थनिश्चयप्रसंगः"-तत्कार्यनिष्कम्पप्रवृत्त्यादिप्रसंगः । द्वितीयाभ्युपगमे दूषणमिदं ( उपजीव्यत्वेनेति ) क्वचि त्साध्याभावनिश्चयात्मकव्यभिचारज्ञानस्वरूपे उपजीव्यत्वेने त्यर्थः ।

"अधिकबलत्वेने" त्यत्र बहुव्रीहिभ्रमं निराकर्तुं दीधितिकृद्व्याचष्टे (अधिकबलरूपत्वेनेति)अनुमितिप्रतिबन्धरूप निश्चयकार्यकारिता प्रयोजकत्वेनेत्यर्थः । एतदुभयस्य प्रमात्वनिश्चयापेक्षायामेव हेतुतया तल्लाभाय प्रमात्वनिश्चय विशेषणं पूरयति ( अपेक्षणीय इति ) निश्चयकार्यार्थ मवश्यं स्वीकरणीय इत्यर्थः । प्रमानिश्चयस्य स्वरूपसद्व्यभिचारा निर्वाहकतया व्यभिचारपदं तन्निश्चयपरतया व्याचष्टे ( व्यभिचार इति ) "व्यभिचारनिश्चयः" - साध्याभावांशे निश्चयकार्यकारिताप्रयोजक

[म] नान्यथा। उभयथापि साध्याभावनिश्चयाधीन व्यभिचारज्ञानात्, पूर्वं ज्ञातं साध्याभावज्ञान प्रमात्वमेव दोषः, उपजीव्यत्वात्। यदि च पक्षे साध्याभावज्ञानस्य प्रमात्वनिश्चयो नानुमिति विरोधी, तदाव्याप्तिपक्ष धर्म तया हेतु ज्ञानं विशेषदर्शनत्वेन पक्षे साध्याभावज्ञानं परिभूय साध्यं

---

[दी] (साध्याभावनिश्चयेति) साध्याभावो निश्चीयते येन प्रामाण्य निश्चयेन तदधीनेत्यर्थः ।

---

[ग] रूपविशिष्टव्यभिचारज्ञाननिर्वाहः। तच्च रूपं निश्चयत्वमिव निश्चितप्रामाण्यकत्व मपीति पक्षद्वयसंगतिः। व्यभिचारज्ञानस्य साध्याभावनिश्चयात्मकतया तदधीनत्वकथनासंगतेः साध्याभावनिश्चयपदं करणव्युत्पत्त्या तत्प्रमात्वनिश्चयपरतया वर्णयति (साध्याभाव इति) व्यधिकरणबहुव्रीह्यसहिष्णुतया साध्याभावस्य निश्चयो यस्मादिति नव्याख्यातम् । तदधीनत्वं च तन्निर्वाह्यनिश्चयकार्यकारिताप्रयोजकरूपवत्त्वम् । एवञ्चेदानीं ज्ञानयोः क्रमिकत्वे हेतुत्वेनाभिमतम् ।

"पूर्वं ज्ञात" मिति च मूलं तज्ज्ञानभिन्नज्ञानविषयीभूत मित्यर्थकम् (उपजीव्यत्वा दिति) स्वरूपे प्रतिबन्धकत्वेचेत्यादिः । एवञ्चेदानीं दोषत्वहेतुतयोपात्तम् ।

ननु वह्नि रनुष्ण इत्यादौ साध्याभाववत्ताज्ञाना देवानुमित्यनुत्पादनिर्वाहात् तत्प्रमात्वधिय स्स्वरूपतो ऽविरोधित्वेन तत्प्रमात्वस्य हेत्वाभासता नोपपद्यत इत्याशंक्य प्रमात्वज्ञानस्या नुमितौ स्वतः प्रतिबन्धकत्वं व्यवस्थापयति (यदि चेति) साध्याभाववत्ताबुद्धे रनुमितिसाधारण तद्विशिष्टधीप्रतिबन्धकतया तस्याः परामर्शेन विशेषदर्शनात्मकेनापि न परिभवसम्भवः, तत्प्रतिबन्धकसत्त्वे कस्यापि

[म] साधयेदेव, पर्वते धूमइव वह्निं। नच साध्याभावबुद्धिरेवा गृह्यमाणविशेषा सत्प्रतिपक्षवत् प्रतिबन्धिकेति वाच्यं, रजतेनेदं रजतमिति ज्ञानेपि विशेषदर्शनेन रजतत्वस्य, शंखेपीतत्वज्ञानेपि शुक्लत्वस्य चानुमानात्। वादिवाक्येन पक्षे साध्याभावज्ञाना दनुमानोच्छेद प्रसंगाच्च। अथ पक्षे साध्याभावप्रमैव साध्याभाव हेतुविषया व्यभिचारज्ञानत्वेन दोषः, नतु तस्याः प्रमात्व ज्ञानमपीति चेत्? तर्हि प्रमायाः अप्रमात्वज्ञाने भ्रान्तानुमितिर्नस्यात्, नस्याच्च पक्षे साध्याभावज्ञान प्रमात्वभ्रमा दनुमिति प्रतिबन्धः। ननूपजीव्यत्वे ऽ प्यत्र साध्याभावप्रमेति ज्ञानं न स्वतोदूषकं, क्लृप्तत्वात् पक्षे साध्याभावनिश्चयं कुर्वत् व्यभि

---

**[ग] हेतोः कार्योत्पादकत्वायोगा दित्याशंका निराकरोति "नचे" त्यादिना। "अगृह्यमाणविशेषा," अगृहीता प्रामाण्या (रजतेनेदं रजतं मितीति) अप्रामाण्यज्ञानं विनैवेत्यादिः (विशेषदर्शनेनेति) परामर्शरूपेणेत्यादिः (अनुमानादिति) तथा च विशेषादर्शनविशिष्टत्वेनैव ग्राह्याभावबुद्धेः प्रतिबन्धकत्व मुपगन्तव्य मित्यनुमिति मात्र एव प्रमात्वेना निश्चितसाध्याभावधियो ऽ विरोधित्व मिति भावः। प्रमात्मकग्राह्याभावज्ञान मेवा नुमितिप्रतिबन्धकम्, अतो न पीतत्वादिभ्रमदशाया मपीतत्वानुमित्यनुपपत्तिः; तत्प्रतिबन्धकतापि व्यभिचारज्ञानविधयैव, न स्वातन्त्र्येणेति न तद्विषयस्य साध्यहेत्वा भावतेति शंकते (अथेति) (तर्हीति) वस्तुगत्या प्रमाया एव प्रतिबन्धकत्व इत्यर्थः। माभू त्साध्याभावज्ञान मनुमितौ स्वतः प्रतिबन्धकं, तथापि तत्प्रमात्वबुद्धेः प्रतिबन्धकत्व मफलं, वह्नि रनुष्ण इत्यादौ वह्न्यादौ उष्णत्वादिनिश्चयासत्त्वे तत्प्रमात्वनिश्चयेप्यनुमित्युपगमा त्तन्निश्चयदशायां व्यभिचारज्ञानादेवानुमित्यनुत्पादनिर्वाहात्; शंखः पीत इत्यादौ चापीतत्वाद्यनुमितेः व्यभिचारधीसत्त्वेपि नानुपपत्तिः साध्याभावांशे अगृहीताप्रामाण्यकत्वस्य व्यभिचारधीप्रतिबन्धकतायां निवेश्यत्वा दिति शंकते (नन्विति) (साध्याभावनिश्चयं कुर्वदिति) अनुमितिप्रतिबन्धरूप निश्चयकार्यकारिताप्रयोजक**

[भ] च्चार ज्ञानद्वारेति चेन्न;- अत्र साध्याभावप्रमेति ज्ञाना न्नियमतः साध्यज्ञानानुदयात्, तस्यैव प्रतिबन्धकत्वात् । शाब्दादौ तथा दर्शनात् । साध्याभावप्रमाविषयवृत्तित्वस्य हेतुवृत्तित्वादसाधकत्वेन साध्याभावप्रमाया हेत्वाभासत्वम् । साधारण्येऽपि ज्ञायमानंसत् यदनु मितिं प्रतिबध्नाति तस्यैव हेत्वाभासत्वम् । नच साध्याभावप्रमेति निश्चयदशायां पक्षेसाध्याभावहेतु ज्ञानाद्व्यभिचारइति वाच्यं, प्रमात्व ज्ञानस्य साध्याभावनिश्चय हेतुत्वेन तद्दशायां तदभावात् । पक्षधर्म तावलेन प्रसिद्धं बाधान्नसिद्ध्यतीति बाधः पृथक्, प्रसिद्धाभाववति

---

[ग] विशेषणवैशिष्ट्यं निर्वाह्य दित्यर्थः । साध्याभावज्ञाना सत्त्वेपि तद्विषयप्रमात्वनिश्चयकाले नसाध्यज्ञानमित्यनुभव मालंब्य समाधत्ते (नेति) (तस्यैवेति) तस्यापीत्यर्थः (प्रतिबन्धकत्वादिति) तादृश ज्ञानकाले व्यभिचारज्ञानानियमोऽग्रे दर्शनीयः । शाब्दादि साधारण बुद्धौ ग्राह्याभावज्ञान प्रमात्वज्ञानस्य प्रतिबन्धकत्वेपि बाधस्या सा- धारण हेतु दोषत्व मुपपादयति (हेतुवृत्तित्वा दसाधकत्वेनेति) हेतुवृत्तितया विरोधित्वस्यानुमितिमात्रनिरूपितत्वेनेत्यर्थः । हेतुनिष्ठ साध्याभाव प्रमाविषयवृत्तित्व पर्यन्तस्य न दोषतेत्यभिसन्धायाह (सा- धारण्येपीति) पक्षे साध्याभावप्रमेति ज्ञाने प्रमात्वघटकतया पक्षे साध्याभाववत्त्वज्ञाने तदपिज्ञानं व्यभिचारज्ञानरूपमेवेति दोषान्तरज्ञा- नात्मकं यज्ज्ञानमनुमिति प्रतिबन्धकं स एव दोषइति नियमात् साध्याभाव प्रमाज्ञानस्य शाब्दादिसाधारण विशिष्टज्ञान प्रतिबन्धक- त्वेपि तद्विषयस्य न हेत्वाभासतेति शंकते (नच साध्याभावप्रमेति) हेतुमत्त्व ग्रहविषयतावच्छेदक पक्षतावच्छेदकावच्छिन्ने साध्याभाववत्त्व मनवगाह्यापि पक्षनिष्ठविषयतायां साध्याभाववद्वृत्तित्वावगाहिनः पक्षे साध्याभावप्रमेति निश्चयस्य पक्षतावच्छेदकविशिष्टे साध्याभावनिश्च योपजीव्यस्य सम्भवा न्नोक्तबाधज्ञानस्य व्यभिचारज्ञानरूपतेति समा- धत्ते (प्रमात्वेति) पक्षनिष्ठ साध्याभावस्य बाधत्वमभ्युपेत्यापि बाध- स्य पार्थक्यं व्यवस्थापयति "पक्षधर्मताबलेने" त्यादिना ।

[ दी ] अत्रेदं तत्त्वं — साध्याभाववान्

---

[ग] साध्याभावबुद्धेः प्रमात्वज्ञानस्य प्रतिबन्धकता निराकृत्य तत्प्रमात्वस्य दोषतया अग्रे स्वयं दूषणीयतया दीधितौ वस्तुतो बाधस्वरूपाण्याह "अत्रेद" मित्यादिना ( साध्याभाववानिति )

अत्र साध्याभाववत्त्व मनवच्छिन्नं ग्राह्यम् , अतो न कपिसंयोगाभाववद्वृक्षाद्यावतिप्रसंगः । नच – अनवच्छिन्नत्वा नवगाहिनोऽपि तदभाववत्ताज्ञानस्या व्याप्यवृत्तित्वा ग्रहदशायां तद्वत्ताधी प्रतिबन्धकतया ऽनवच्छिन्नत्वाविशेषित साध्याभाववत्त्वस्यापि दोषत्वं दुर्वारमिति-वाच्यम् ; प्रतिबन्धकीभूताभाववत्ताज्ञाने नियमतोऽधिकरणांशे सम्बन्धघटकतया ऽनवच्छिन्नत्वभानोपगमात् । अन्यथा ऽव्याप्यवृत्तित्व ज्ञान-कालीनज्ञानस्या विरोधित्वायोक्त ज्ञानाभावविशिष्टत्वेन प्रतिबन्धकत्व-स्योपगन्तव्यतया गौरवात् । तदपेक्षया ऽनवच्छिन्नत्वावगाहितया तथात्वे लाघवात् । पूर्वोत्पन्ना व्याप्यवृत्तित्व ज्ञानवशा दनवच्छिन्नवृत्तिकत्वा नवगाहिनोऽभाववत्ताज्ञानस्य अव्याप्यवृत्तित्व ज्ञाननाशे प्यप्रतिबन्धकत्व मिष्टमेव । देशकालरूपधर्मितावच्छेदकावच्छेदेन तदभाववत्ताज्ञानस्य तदवच्छेदेन तद्वत्ताज्ञानेप्रतिबन्धकत्वान्तरकल्पनं अव्याप्यवृत्तित्व ज्ञानोत्तेजकतापक्षे प्यावश्यकं, अव्याप्यवृत्तित्वेन ज्ञातयोरपि भावाभावयोरेकावच्छेदेनैकदा ऽनिश्चयात् । नच - अनवच्छिन्नवृत्तिकत्वावगाहित्वेनाभाववत्ताज्ञानस्य प्रतिबन्धकत्वे अयं संयोगवान् तदभाववांश्चेति समुच्चयस्यायं संयोगवान्नवेति संशयाविरोधिताप्रसंगः, तस्य व्याप्यवृत्तित्वानवगाहित्वादितिवाच्यं; समुच्चयस्य कोटिद्वयसामानाधिकरण्य विषयकतया विरोधभाननिवर्तकतयैव संशयविरोधित्वात् । भवतुवा अव्याप्यवृत्तित्वज्ञानाभावविशिष्टस्य व्याप्यवृत्तित्वानवगाहिनोऽपि ज्ञानस्य प्रतिबन्धकत्वं; तथापि वृक्षनिष्ठसंयोगाभावादौ नातिप्रसंगः, तद्विषयकनिश्चयत्वस्यानुमितिप्रतिबन्धकता शून्याव्याप्यवृत्तित्वज्ञानकाली

न ज्ञानसाधारणत्वेन तदतिरिक्तवृत्तित्वात् । अव्याप्यवृत्तिसाध्यकस्थले पक्षनिष्ठानवच्छिन्नसाध्याभाववत्त्वमेवबाधः । तद्विषयकत्वञ्च प्रतिबन्धकज्ञाने नियतमेव । साध्याभावधर्मिका व्याप्यवृत्तित्व भ्रमासमानकालीननिश्चयवृत्तित्ववैशिष्ट्यं सामान्यलक्षणप्रविष्टविषयतायां निवेश्य शुद्धविशेषणतया साध्याभाववत्पक्षस्यैव बाधत्वमुपपादनीयं । गुणेसंयोगाभावो ऽव्याप्यवृतिरिति भ्रमसमानकालीनस्यैव संयोगाभाववद्गुणनिश्चयस्य विरोधिताशून्यत्वेन तादृशाविशेषणविशेषित विशिष्टविषयताया नानातिरिक्तवृत्तित्वहानिरिति संयोगाभाववद्गुणसाधारणत्वमभ्युपगतमेवेतिकेचित् ।

अनवच्छिन्नसाध्याभाववद्देशकालरूप पक्षतावच्छेदकावच्छेदेन साध्याभाववत्वं तदवच्छेदेन साध्यसाधनेबाधः । एवं पक्षतावच्छेदकधर्मे अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वभानं यत्रोद्देश्यं तत्र पक्षतावच्छेदकसामानाधिकरण्येन साध्याभाववत्वं, यत्रच तादृशधर्मसामानाधिकरण्यमात्रेण साध्यसिद्धिरुद्देश्या तत्र तादृश धर्मावच्छिन्न साध्याभाववत्वं बाधइति विशेषोबोध्यः ।

पक्षेसाध्यस्य यादृशसम्बन्धोनुमितिविषयः तत्सम्बन्धपर्याप्तप्रतियोगितावच्छेदकताकोभावो विवक्षणीयः । अत्रच यत्र संयोगादिना साध्यानुमितिरुद्देश्या तत्र संयुक्तसंयोगादिसम्बन्धावच्छिन्नाभावस्याविरोधितया बाधानात्मकत्वा त्पर्याप्तिनिवेशः । यत्र संयुक्तसंयोगादिरूप परम्परासम्बन्धोनुमितिविषयः तत्र शुद्धसंयोदिसम्बन्धावच्छिन्नाभावोनबाधः, पक्षाविषयतानिरूपित संयोगादिविषताया स्वाक्षात्साध्यविषयत्वानिरूपिततया पक्षे संयोगादे स्वाध्यसम्बन्धताविरहात् । धर्मितावच्छेदक व्यापकताविशिष्टसंयोगादिना साक्षात्सम्बन्धेनानुमानेच तादृशाभावो बाधएव । उक्तारीति रग्रेप्यनुसर्तव्या ।

[ दी ] साध्यवदन्यो वा पक्षः, पक्षावृत्तिसाध्यं, पक्षे साध्याभावः,

---

[ ग ] ( साध्यवदन्योवेति ) तद्वत्ताबुद्धौ तदत्यन्ताभावस्येव तद्व द्भेदस्यापि धियो विरोधित्वादिति भावः । एवञ्च वृत्त्यनियामकसम्बन्धेनानुमिति स्वीकारे तत्सम्बन्धस्य प्रतियोगितानवच्छेदकत्वेच तत्र साध्यवद्भेदस्यैव बाधत्वंबोध्यम् । वाकारस्साध्याभाव साध्यवद्भेदयोः पृथक्पृथक्पक्षे विशेषणता, नतु मिळितयोरिति ळाभाय । "पक्षः" पक्षतावच्छेदकविशिष्टः ( पक्षावृत्तिसाध्यमिति ) पक्षावृत्तित्वविशिष्ट साध्यतावच्छेदकावच्छिन्नमित्यर्थः ।

यद्यपि पक्षस्साध्यवानित्यनुमितौ पक्षे साध्यस्याधिकरणत्वमेव संसर्गतयाभासते, नतु साध्येपक्षवृत्तित्वं, तथासति पक्षे साध्यस्येव साध्येपि पक्षस्य प्रकारतापत्तेरिति तादृशानुमितौ साध्यं पक्षावृत्तीति ज्ञानस्य ग्राह्याभावज्ञानविधया न विरोधित्वं, तथापि पक्षस्साध्यवान् पक्षेसाध्यमितिज्ञानयो स्समशीळयो रेकस्य यत्प्रतिबध्यत्वमपरस्यापि तत्प्रतिबध्यत्व मनुभवसिद्धमित्याशयेनैदुक्तिः । पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकावच्छिन्नत्व विशिष्टसाध्यस्यापि तुल्य युक्त्या बाधताबोध्या । एतच्च प्राचीनमतानुसारेण ।

वस्तु तस्तु- तदीय तत्संसर्गावगाहिबुद्धौ तत्सम्बन्धावच्छिन्न तदभावबुद्धेः प्रतिबन्धकत्वमिति संसर्गविधया यद्भासते तत्संसर्गस्य विशिष्टबुद्ध्यविषयतयाऽऽधाराधेयभावसंसर्गकबुद्धौ आधाराधेयभावाभाव ज्ञान प्रतिबन्धकताया अप्रामाणिकत्वा त्पक्षवृत्तित्वा द्यभावघटितस्य न दोषता । अत एवाग्रे यथामतमित्यभिधास्यते । एतन्मते अवृत्तित्वविशिष्ट साध्यस्यासिद्धि विशेषात्मकस्यापि बाधरूपताबोध्या , वक्ष्यमाण ळक्षणाक्रान्तत्वात् ।

विशेष्यविशेषणभावयो वैपरीत्येपि प्रतिबन्धकत्वमक्षत मित्याशयेनाह ( पक्षेसाध्याभावइति ) आधेयतया पक्षेण पक्षवृत्तित्वेन वा

[ दी ] पक्षनिष्ठसाध्याभाववत्त्वादिकं, साध्यादेः पक्षा वृत्तित्वादिकं, साध्यवत्सामान्यादेः पक्षान्यत्वादिकं, विशिष्टसाध्ये पक्षादे र्विशेष्याभाववत्त्वादिकं– यथामतं पक्षे साध्यवत्ताज्ञानस्य साक्षाद्विरोधि । प्रत्येक मेव बाधः । तन्निश्चय श्च विरोधिनिश्चयत्वेन दोष

---

[ग] विशिष्टस्साध्याभाव इत्यर्थः। तादृशसाध्यवद्भेदोऽपि बोध्यः । (पक्षनिष्ठ साध्याभाववत्त्वादिकमिति ) साध्याभावाधिकरणत्वं साध्यवद्भेदाधिकरणत्वश्चेत्यर्थः । अधिकरणताबुद्ध्या पूर्वस्माद्भेदो बोध्यः । एत दपि प्राचीनमतेन । “ साध्यादे ” रित्यादिना साध्यसम्बन्धपरिग्रहः । “ पक्षावृत्तित्वादिक ” मित्यादिना अवृत्तित्वपरिग्रहः । आदिपदाभ्यां साध्यतावच्छेदकस्य पक्षनिष्ठात्यन्ताभाव प्रतियोगितावच्छेदकत्वादि परिग्रहोवा । एतदपि सर्वं प्राचीनमतेन । भेदप्रतियोगित्व भेदानु· योगित्वयो स्समशीलतया एकतरज्ञानं यत्राविरोधि अपरज्ञानमपि तत्र तथेत्याशयेनाह ( साध्यवदिति ) साध्यवत्त्व व्यापकानुयोगिताकत्वादि विशिष्टपक्षभेदादिकमित्यर्थः । आदिपदाभ्यां पक्षतावच्छेदकावच्छिन्नस्य साध्यवत्सामान्यनिष्ठभेद प्रतियोगित्वपरिग्रहः। वक्ष्यमाणलक्षणे विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्य ग्रहत्वे स्वरूपसम्बन्धरूपस्य प्रतिबध्यतावच्छेदकत्वस्या निवेशात विशिष्टपक्षसाध्यग्रहा विरोधित्वादि विशेषणसार्थक्य मिति सूचयितुमाह( विशिष्टेति )आदि पदाभ्यां विशेष्यस्य पक्षावृत्तित्वादि परिग्रहः । विशिष्टस्य पक्षत्वे विशेष्यता वच्छेदकावच्छेदेन साध्याभाव वत्त्वादिकमपि बोध्यं । मूलकृताग्राह्याभाव बुद्धेः प्रमात्वग्रहस्य प्रति बन्धकत्व मन्यत्र क्लृप्तमिति “शाब्दादौ तथा दर्शनादि ” त्यनेनाभिहितं, अतउक्त बाधज्ञान प्रतिबन्धकत्वस्यैव तथात्वमित्याह ( तन्निश्चयइति ) ( विरोधिनिश्चयत्वेनेति ) धर्मिणि ग्राह्याभाव विषयक त्वेनेत्यर्थः । तथात्वेसति विरोधिताया स्सर्वानुभव सिद्धत्वादिभावः ।

[ दी ] विशेषाद्यजन्यज्ञानमात्र एव विरोधि । अत एवानन्वयनिश्चय विरहो योग्यते त्याचार्याः ।

विभाजकन्तु प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्यनुमायकत्वे प्रकृतपक्ष प्रकृतसाध्यग्रहा विरोधित्वेच प्रकृतपक्ष प्रकृतसाध्य वैशि-ष्ट्य ग्रहविरोधित्वम् ।

---

[ग] (मात्रपदेवेति) मात्रपदं कृत्स्नार्थकं । ग्राह्याभावनिश्चयस्य शाब्दबोधविरोधित्वे आचार्यसंमतिमाह ( अतएवेति ) मणिकृता एकपदार्थसंसर्गे अपरपदार्थ निष्ठाभावप्रतियोगित्व प्रमाविषयत्व ज्ञानस्य शाब्दधीविरोधित्व मित्याशयेन तत्र तादृश प्रमाविषयत्वा भावरूपयोग्यताया ज्ञानोपयोगिता शब्दपरिच्छेदे स्वीकरिष्यते ।

( प्रकृतपक्षेति ) सत्प्रतिपक्षवारणाय प्रथमसत्यन्तं । पक्षाप्रसिद्धिसाध्याप्रसिद्ध्यो वारणाय द्वितीयं । उदासीनवारणाय विशेष्यं ।

यद्यपि साध्याभाव विशिष्टपक्षादि रूपबाधे विरोध्युन्नायक साध्याभावव्याप्य विशिष्टपक्षाद्यन्यत्वं, विशिष्टपक्षादिग्रह विरोधिपक्षतावच्छेदकाभावविशिष्टपक्षाद्यन्यत्वंचा प्रसिद्धम् ; तथापि यादृश विशिष्टनिरूपित विषयिता विरोध्यनुमिति जनकतानवच्छेदकत्वेसति विशिष्टपक्षग्रहत्वस्य विशिष्टसाध्यग्रहत्वस्य च न्यूनवृत्तिर्याविशिष्टपक्षे विशिष्टसाध्य वैशिष्ट्यग्रहत्वा न्यूनवृत्तिः प्रतिबध्यता तन्निरूपित प्रतिबन्धकतावच्छेदिका तादृशत्वमित्यत्र तात्पर्यम् । शेषं पूर्वोक्तदिशावसेयम् .

अथात्र लक्षणे वह्निमान् ह्रदोवह्निमानित्यादौ वह्न्यभाववद्ह्रदादि रूपबाधेऽव्याप्तिः, तद्विषकत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताया विशिष्टपक्षग्रहत्वव्यापकत्वात ; नच-पक्षतावच्छेदकादिभेदेन बाधलक्षणस्य भिन्नतया यत्र साध्यमेव पक्षतावच्छेदकं तत्र विशिष्टपक्षग्रहाविरोधित्वस्या निवेशनीयतया नाश्रयासिद्ध्यात्मकबाधासंग्रहइति

च्यं; वह्निमान् कांचनमयहृदो वह्निमानित्यादौ काञ्चनमयत्वाभाव विशिष्ट ह्रदादिरूपाश्रया सिद्ध्यादा वतिव्याप्तिवारणाय तादृशपक्षक बाधलक्षणे अविरोधित्वस्यावश्यं निवेशनीयतया तत्रत्याश्रया सिद्ध्यादिरूपबाधे ऽव्याप्ते दुर्वारत्वादिति चेन्न ;- आश्रयासिद्ध्या त्मकस्य तस्यालक्ष्यत्वात । लक्ष्यत्वेतूद्देश्यतावच्छेदकताविधेयताव च्छेदकतातिरिक्त विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यबोधीयविषयतान्तःपातिप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपित प्रतिबन्धकतावच्छेदक विषयिताकत्वस्या विरोधित्वान्तर्घटितविरोधित्वान्तेन विवक्षणीयत्वात। कांचनमयहृदो वह्निमानित्यादौ आश्रयासिद्ध्यादिज्ञानस्य प्रतिबध्य तावच्छेदिका नोक्तोद्देश्यतावच्छेदकताभिन्ना विशिष्टपक्षे विशिष्टसाध्य बोधीयविषयतान्तःपातिनी प्रकारतेति तद्व्युदासः । उक्तपक्षाप्रसिद्धि रूपबाधबुद्धे श्च तादृशप्रकारताभिन्ना या विधेयमुद्रयोक्तविशिष्टवैशि ष्ट्यविषयतान्तःपातिनी साध्यप्रकारता तस्या अपि ह्रदत्वावच्छिन्न विशेष्यतानिरूपित वह्न्यादिप्रकारतात्वेन प्रतिबध्यतावच्छेदकत्वात् न तादृशबाधासंग्रहः । प्रकारताया मुक्तविशिष्टवैशिष्ट्यविषयताशा- लिज्ञानवृत्तित्व मुपेक्ष्य तादृशविषयतान्तःपातित्वनिवेशाच्च न कांच नमयहृदो वह्निमान् ह्रदश्च कांचनमय इत्येतादृशज्ञानीया या विधेयमुद्रया प्रकारता तस्याः ह्रदत्वावच्छिन्नविशेष्यतानिरूपित कांचनमयत्वादि प्रकारतात्वे नाश्रयासिद्ध्यादिज्ञानप्रतिबध्यतावच्छेदकत्वे ऽप्यतिप्रसंगः।

ननु - तथापि पर्वतो वह्निव्याप्याभाव वह्न्यभाव उभयवानित्यादौ वह्निव्याप्यवत्पर्वतरूपबाधे ऽव्याप्तिः, तस्य वह्निमत्पर्वतरूपविरोध्यु न्नायकत्वादिति चेन्न;- विरोधित्वान्तघटकप्रतिबन्धकतावच्छेदकतायां विरोध्युन्नायकतानवच्छेदकत्व मनिवेश्य प्रतिबन्धकतायां स्वनिरूपित प्रतिबध्यतावच्छेदकावच्छिन्न प्रतिबध्यतानिरूपित विरोधितावच्छेदक विषयत्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपित जनकतावच्छेदकविष यित्वानवच्छिन्नत्वस्य निवेशनीयत्वात । प्रकृते च वह्निव्याप्याभाव वत्ताज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपित प्रतिबन्धकतां स्वपदेनोपा

[ दी ] पक्षादेः साध्यासमानाधिकरण धर्मवत्त्वादिकमपि बाधएव । साध्याभाववत्पक्षादिज्ञानप्रमात्वन्तु न बाधः, तज्ज्ञानस्य पक्षादौ साध्याभावादे रनवगाहित्वे विरोधिविषयत्वाभावात् ;

---

दायोक्तबाधे लक्षणसमन्वयसम्भवात् । तथाहि- तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकं न वह्न्यभाववत्पर्वतज्ञानत्वम् , किन्तु वह्निव्याप्याभाववत्पर्वतज्ञानत्व मेव , अत स्तादृशनिश्चय प्रतिबन्धकताया वह्न्यभाववत्पर्वतज्ञानविरोधिवह्निमत्पर्वतोन्नायकतावच्छेदकवह्निव्याप्यवत्पर्वतविषयित्वावच्छिन्नत्वेपि वह्निव्याप्याभाववत्पर्वतज्ञानविरोधि वह्निव्याप्यवत्पर्वतोन्नायकतावच्छेदक वह्निव्याप्यव्याप्यवत्पर्वतविषयकत्वानवच्छिन्नत्व मक्षत मेव । तथा चोद्देश्यतावच्छेदकताविधेयतावच्छेदकतातिरिक्त विशिष्टपक्षसाध्यवैशिष्टयबोधीयविषयतान्तःपाति प्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपिता सती स्वनिरूपितप्रतिबध्यतावच्छेदकविषयत्वावच्छिन्न प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठ जन्यतानिरूपितजनकतावच्छेदकविषयित्वानवच्छिन्ना या प्रतिबन्धकता तदवच्छेदकस्वनिरूपितविषयिताकत्वमिति निष्कर्षः ।

ननु -पक्षादौ साध्यासमानाधिकरणधर्मवत्ताज्ञानस्यानुमितिविरोधितया साध्याभावाभावत्वेन साध्याद्यनवगाहिन स्तस्य साध्याभावव्याप्त्यनवगाहित्वेन साध्याभावाननुमापकतया ,च तद्विषयेति व्याप्तिरित्याशंका मिष्टापत्त्यापरिहरति ( पक्षादेरिति ) मूलोक्तसिद्धान्तं दूषयति ( साध्याभाववदिति ) ( पक्षादाविति ) पक्षतावच्छेदकावच्छिन्न इत्यर्थः । ( अनवगाहित्वइति ) तत्र तमनवगाह्यापि भ्रमभिन्नत्वस्य तद्वतितत्प्रकारकत्वस्य चावगाहनसम्भवादिति भावः । ननु- साध्याभाववति पक्षेसाध्याभावप्रकारकमिद मित्याकारकस्य विरोधिविषयक प्रमात्वज्ञानस्य प्रतिबन्धकतया निर्विवादतया तद्विषयस्य

[ दी ] अवगाहित्वेतु तद्विषयकत्वेनैव प्रतिबन्धकत्वात् ; प्रमात्व निश्चय स्यान्यत्र प्रतिबन्धकत्वा कल्पनाच्च । सर्वत्र निश्चयस्य हेतुत्वे प्रतिबन्धकत्वे च भ्रमत्वाग्रहः , संशय साधारण ज्ञान

---

साध्याभाववत्पक्षघटितप्रमात्वस्य हेत्वाभासता निष्प्रत्यूहैवेत्यत आह ( अवगाहित्वेत्विति ) ( तद्विषयकत्वेनैवेति ) पक्षतावच्छेदकविशिष्टे पक्षे साध्याभावावगाहित्वेनैवेत्यर्थः । एवकारेण प्रतिबन्धकतावच्छेदके प्रमात्वघटके तरांशविषयतानिवेशव्यवच्छेदः, तन्निवेशेगौरवात , तदविषयकज्ञानस्यापि विरोधिताप्रयोजक विरोधिविषयताश्रयत्वेन प्रतिबन्धकतया तदसंग्रहाच्चेतिभावः । साध्याभाववत्पक्षघटित प्रमात्व विषयकत्वे अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वसत्त्वेपि मेयत्ववि- शिष्टव्यभिचारादेरिव तादृशविशिष्टान्तरघटितत्वेन न दोषतासम्भव इति बोध्यम् । ननु- विरोध्यविषयकस्यापि धर्मिणिग्राह्याभाव प्रमा विषयकज्ञानस्य शाब्दादौविरोधितादर्शनात अनुमितावपि तत्प्रति बन्धकत्वमव्याहतमेव, तदुक्तं मूलकृता "शाब्दे तौ तथादर्शनादि" ति, अत आह ( प्रमात्वनिश्चयस्येति ) ( प्रतिबन्धकत्वाकल्पनादिति ) शाब्दबोधादावपि तत्प्रतिबन्धकत्वानुभवस्य तुल्यन्यायेनासिद्धत्वादि- तिभावः । ननु - साध्याभावज्ञानसत्त्वेपि तत्राप्रामाण्यग्रहेनुमित्युत्पत्ते रनुमितौ साध्याभावज्ञानं न प्रतिबन्धकं, अपितु तत्प्रमात्वग्रहएवेत्यत आह ( सर्वत्रेति ) "भ्रमत्वाग्रहः" -संशयसाधारण भ्रमत्वज्ञानत्वाव- च्छिन्नाभावः । प्रयोजकइत्यन्वयः । प्रयोजकत्वंचावच्छेदकत्वम् । अत्र हेतुत्वोपादानं दृष्टान्तत्वेनं । अत्र ज्ञानसामान्यमनुपादाय निश्चयरूपवि- शेषोपादान व्यवच्छेद्यं स्पष्टयति ( संशयसाधारणेति ) ननु साध्या- भावनिश्चयस्य तद्धर्मिक भ्रमत्वग्रहाभावविशिष्टस्य विरोधित्वापेक्षया साध्याभावज्ञान प्रमात्वग्रहस्यैव प्रतिबन्धकत्व मुचितमित्याशंका

[दी] मात्रस्य तथात्वे तु भ्रमत्वानिश्चयः प्रयोजकः। अन्यथाकांक्षाकृति साध्यत्वादिनिश्चय हेतुप्रतिहेतुपरामर्शादीनां प्रमात्वनिश्चयो योग्यता व्यभिचारज्ञानादीनां च प्रमात्वज्ञानं प्रयोजक म्भवेत् । शंखादौ शुक्लत्वाभावभ्रमे च शुक्लत्वाद्यनुमिति र्न विना तदप्रामाण्यग्रहम्। नहि स्वरूपसत्यपि बाधनिश्चये शाब्दमानसादिज्ञान मुत्पद्यते ।

---

न्निराकर्तुं प्रतिबन्दीमाह ( अन्यथेति ) (प्रयोजकम्भवेदिति ) यथोपयोगं कार्यजनने कार्य प्रतिबन्धेचेतिपूरणीयं । तथा च यथाकांक्षाज्ञानाद्यसत्त्वे तत्प्रमात्वग्रहेऽपि न शाब्दबाधोत्पत्त्यादि रित्यगृहीताप्रामाण्यकस्यैवा काक्षादिज्ञानस्य कारणत्वादिकं, तथा साध्याभावनिश्चयासत्त्वे त त्प्रमात्वग्रहेऽपि न साध्यज्ञान प्रतिबन्ध इति अप्रामाण्यग्रहाभावविशिष्टस्य साध्याभावनिश्चयस्यैव तज्ज्ञानप्रतिबन्धकत्वमितिभावः। ननु शंखादौश्वैत्या भावादिभ्रमे अप्रमात्वज्ञानं विनापि श्वैत्याद्यनुमिते र्न साध्याभाव ज्ञानस्य साध्यग्रह विरोधितेत्यत आह ( शंखादाविति ) ( विनातद प्रामाण्यग्रहमिति ) फलानुरोधेन तत्र भ्रमत्वज्ञानस्यैव कल्पनादिति भावः । प्रमात्वेना निश्चीयमानापि अप्रमात्वेना गृह्यमाणा ग्राह्याभावधीः शाब्दबोधादि धीप्रतिबन्धिकेति भवता मप्यनुमतं, विशेषदर्शन त्वेन लिंगपरामर्शस्यैव साध्याभावज्ञान परिभावकताया भवदभिमतत्वात , तथाच शाब्दबोधादौ तत्प्रतिबन्धकता ध्रौव्ये अनुमिति साधारणानुगतरूपस्यैव तत्प्रतिबद्ध्यता वच्छेदकत्वा त्तत्र विपरीत ज्ञाने भ्रमत्वज्ञान कल्पनया अनुमित्युपपादन मेवोचितम् ; अन्यथा शाब्दबोधादि साधारण विपरीतज्ञान प्रतिबध्यतावच्छेदकगर्भे नुमित्यन्यत्वस्य निवेशनीयतया नुमितौ साध्याभावज्ञान प्रमात्व बुद्धेः प्रति ब [illegible]न्धकत्वान्तरस्य कल्पनीयतया गौरवात् ,अनुमित्यन्यत्वस्य विपरीतज्ञान प्रतिबध्यता वच्छेदकत्वे आश्रयासिद्धि ज्ञानकाले अनुमित्यापत्तेः , पक्षतावच्छेदकादि व्याप्यवत्ता ज्ञानस्यानुमित्य जनकतया तद्विपरीतज्ञानदशायां तच्छाब्दबुद्ध्यादेरिव तदवच्छिन्न पक्षादि विषयकानुमितेः भवतोप्य निष्टत्वादित्याह ( नहीति )

[ दी ] अथ लाघवेन संशयसाधारणं संसृष्टत्वज्ञानमेव शाब्दानुमित्योः

---

अथ शाब्दबोधे विपरीत निश्चयाभावो न हेतुः, योग्यताज्ञानहेतुतयैवोपपत्तेः ; एवंचानुमितावपि नतस्यहेतुता, शाब्दानुमिति साधारण परोक्षानुभवत्वस्य जातिविशेषस्यवा विशेष्ये विशेषणवत्त्वरूपयोग्यताज्ञान जन्यतावच्छेदकत्वोपगमात् , तादृश कारणविरहेणैव बाधितार्थां नुमित्यनुदयादिति बाधस्य साक्षादनुमिति विरोधितया हेत्वाभासताभिधान मसंगतमित्याशंकते ( अथेति ) ( लाघवेनेति ) तदभाव ग्रहाभावत्वापेक्षया तद्वत्ताज्ञानत्वरूप जनकतावच्छेदक लाघवेन, तद्वद्भेद तदभाव व्याप्यादि निश्चयाभावानामपि हेतुत्वा कल्पनया लाघवेनचेत्यर्थः । वाक्यार्थस्य पक्षे साध्यस्य च निश्चयः शाब्दनुमित्योः पूर्वं नियमतो न सम्भवतीत्यत उक्तं " संशय साधारण"मिति । एव कारेण विपरीत निश्चयाभावव्यवच्छेदः । प्रत्यक्ष स्थले अलौकिक प्रत्यक्षत्वमेव बाधादिधी प्रतिबध्यता वच्छेदक मितिभावः । नच- प्रत्यक्षस्थले अलौकिक ज्ञानत्वस्य विपरीत ज्ञान प्रतिबध्यतावच्छेदकतयैवोपपत्तेः संसृष्टत्व ज्ञानहेतुतान्तर कल्पनायामेव गौरवमिति वाच्यम् ; इच्छाया उत्तेजकत्वं प्रत्यक्षस्थले नतुपरोक्षस्थल इति पृथक्प्रतिबन्धकताया भवतो ऽप्यावश्यकत्वात्, बाधाभावस्य शाब्दबोधादि हेतुतामते शाब्दादि सामग्र्याः प्रत्यक्षादि प्रतिबन्धकतायां योग्यता ज्ञानापेक्षया गुरो र्बाधाभावस्य तदभावव्याप्यवत्ताज्ञानाद्यभावस्य च निवेशनीय तया गौरवाच्च । नच - शाब्दबोधादौ बाधादिधियो ऽविरोधित्वे तद्वत्तासंशयद्वितीयक्षणे स्मरणादिरूपतदभावनिश्चये तदनन्तरं शाब्द बोधाद्यापत्तिरिति वाच्यम् , यत्र विषये संशयद्वितीयक्षणे कथंचि द्विपरीतनिश्चयः शाब्दादिज्ञानकारणान्तरसमवधानं च तत्रापत्ति वारणाय बाधादिनिश्चयप्रतिबन्धकताया आवश्यकत्वेपि विषयविशेषे लाघवेन योग्यताज्ञानहेतुताया निष्प्रत्यूहत्वेत्याशयात् । नन्वेवं बाध

[दी] कारणं, आस्तांच तस्यैव विरोधितया प्रकरणसमोबाधश्च हेत्वा भासः, असिद्धिरिव परामर्शस्य, विलीयतांचाप्रसिद्धसाध्यकमनुमानमिति

---

प्रकरणसमयो र्हेत्वाभासतैव न स्या दित्यत आह (आस्तां चेति) "तस्यैव"- कारणीभूतसंसृष्टत्वज्ञानस्यैव । "असिद्धिरिव"- स्वरूपासि-द्ध्यादिरिव । "परामर्शस्य" - अनुमितिजनकस्य । विरोधितया हेत्वा भास इत्यनुषं गेणान्वयः । नन्वेव मप्रसिद्ध साध्यकानुमिति र्वि लीयेत, कोऽप्यप्रसिद्ध्या साध्य संशयाभावादित्यत्र इष्टापत्तिमाह ( विलीयतांचेति ) तादृशानुमिते रेकदेशिनामेवा नुमतत्वादितिभावः ।

अथ पक्षसाध्ययोः संसर्गज्ञानस्यानुमितिहेतुत्वे ऽप्यप्रसिद्ध साध्य विशेष्यकानुमितौ नतस्य हेतुत्वमावश्यकम् ; नवाबाधज्ञानस्य सा-क्षादनुमिति प्रतिबन्धकत्वं, साध्यविशेष्यकानुमितौ साध्यप्रसिद्धेः प्रतिबन्धकतयैव पक्षेबाधग्रहदशायां तादृशानुमित्यापत्तेरनवकाशादिति कथ मप्रसिद्धसाध्यकानुमानानुपपत्तिरिति चेन्न ;- अभावसाध्यक स्थलएव साध्यप्रसिद्धिमनपेक्ष्यानुमित्युत्पत्त्या तत्रप्रतियोगिमत्ता ज्ञानरूपबाधग्रहस्य साध्यप्रसिद्धिंविनापिसम्भवात साध्यप्रसिद्धिप्रति बन्धकतया तादृशबाधग्रहकाले अनुमित्यापत्तेर्वारयितुमशक्यत्वात् , ता दृशानुमितिस्वीकारे अनुमितौ बाधग्रहस्य साक्षात्प्रतिबन्धकत्वस्या वश्यकत्वात् । एव मत्र पृथिवीतरभेदइत्यादि शाब्दबोधे पृथिवीतर भेदपक्षकधार्मि साध्यकानुमितौ च साक्षाद्बाधज्ञानस्य विरोधित्वमकल्प-यित्वा बाधज्ञानकाले तादृशशाब्दबोध तादृशानुमित्योर्वारणाय धर्मिणि पृथिवीतरभेदसंसर्गज्ञानस्य तदुभयसंसर्गावगाहि परोक्षज्ञानकारणताया आवश्यकत्वात् इतरभेदादिरूपा प्रसिद्धसाध्यकानुमिते रुपगमासंभवः ।

अथ पृथिव्यां पृथिवीतरभेदइत्यादि साध्यविशेष्यकानुमितौ पक्षसाध्य संसर्गज्ञानस्य हेतुत्वासम्भवेपि न बाधज्ञानस्य पृथिवीतरप्रकारकज्ञानरू-पस्य साक्षात्प्रतिबंधकताप्रसक्तिः, पृथिवीत्वावच्छिन्नेतादात्म्यसंबंधेन पृथि

वीतरप्रकारकज्ञानस्या नाहार्यस्याप्रसिद्धेरिति तादृशसाध्यविशेष्यकानुमि ति रव्या हतैव । नच-शुद्धभेदत्वावच्छिन्ने अनाहार्यपृथिव्यवृत्तित्वज्ञानरूप बाध ज्ञानसम्भवात तदानीं पृथिव्या मितरभेद इत्यनुमित्यादिवारणाय पृथिवीतरभेदसंसर्गज्ञानस्य तादृशपरोक्षज्ञानहेतुत्व मावश्यकं, अन्यथा तादृशबाधादिबुद्धे रनुमित्यादौ साक्षात्प्रतिबन्धकत्वकल्पने गौरवप्रसंगात, तथाच कथं साध्य विशेष्यकानुमितिरिति वाच्यम् ; तादृशबाधादि ग्रहदशायामुक्तानुमिते वारणाय भेदत्वावच्छिन्न पृथिवीसंसर्ग ज्ञानत्वेनैव तादृश परोक्षज्ञान हेतुत्वोपगमात, पृथिवीतर भेदत्वरूप साध्यता वच्छेदकावच्छिन्ना प्रसिद्धि दशायामपि केवलभेदत्वरूपेण पृथिवीसं सर्गज्ञानात् तादृशानुमिते स्सम्भवात् । नच- एतन्मते साध्यसं- देहादनुमिते रुपगन्तव्यतया संशयस्यैव पक्षतात्वमिति साध्या प्रसिद्धि दशायां पक्षताविरहेणानुमित्य सम्भवइति वाच्यम् , संशयं विनापि साध्यनिश्चयकाले सिसाधयिषाबलेनानुमित्युत्पत्तेस्सिसाधयिषा विरहविशिष्टसिद्ध्यभावस्यैव पक्षतात्वस्योपेयत्वात् । साध्याविशेष्यका- नुमितौ साध्यप्रसिद्धे र्विरोधितयैव साध्यसिद्धिदशाया मनुमितेर्वा- रणसंभवात् तादृशानुमितौ संशयादिरूप पक्षताहेतुत्वस्य निर्यु क्तिकत्वाच्चेतिचेन्न;- यत्रप्रतिबन्धकबाधादिबुद्धे रसम्भव स्तत्र साध्य विशेष्यकानुमितौ संसृष्टत्वज्ञानहेतुताया निर्युक्तिकत्वेना स्वीकारेपि पृथिव्यांजलभेदः ह्रदे धूमाभावइत्यादिज्ञाने संसृष्टत्वज्ञानहेतुताया अव- र्जनीयतया तादृशानुमितेरसम्भवेन तदभिप्रायेणैव "विलीयतांचे"त्यादि ग्रन्थसंगतेः । नच- पृथिव्यांजलभेद इत्याद्यनुमितेः प्रामाणिकत्वे पृथिव्यांजलभेद इत्यादिशाब्दबुद्धौ संसृष्टत्वरूप योग्यताज्ञानस्य हेतुत्वे शाब्दत्वमेव जन्यतावच्छेदकंवाच्यं, तादृशानुमितौ चा गत्या बाधादिबुद्धेरेव साक्षात्प्रतिबन्धकत्वमुपेयं, विषयभेदेनकार्यकारणभाव भेदस्यावश्यकत्वादिति कथन्तादृशानुमिति विलयइति - वाच्यम् ; साध्यविशेष्यकानुमिते स्सिद्धान्तिभिरनभ्युपगमात् तदनुरोधेनानुमिति

विशेषेसंसृष्टत्वज्ञानहेतुता मनभ्युपगम्य बाधबुद्धे स्साक्षाद्विरोधित्व कल्पनाया अयुक्तत्व मित्याशयेनैतादृशानुमितिविळयस्योक्तत्वात् । नच - साध्यविशेष्यकानुमिते रनभ्युपगमे पृथिव्यां जळादिभेदसाध्य कानुमानस्य पक्षैकदेशे साध्यप्रसिद्ध्यासम्भवेपि एकव्यक्तिपक्षक तदितरभेदादिसाध्यकानुमानस्या गतिरिति साध्यविशेष्यकानुमिति स्वीकार आवश्यक इति कथं तदनभ्युपगम इति- वाच्यम् , तादृ शानुमित्यनभ्युपगमेपि साध्याविषयकव्यतिरेकव्याप्त्यवगाहिपरामर्शात् विशेषदर्शनरूपात तादृशळौकिकप्रत्यक्षस्यैव प्रथमं स्वीकरणीयतया तदात्मकविशेषणतावच्छेदक प्रकारकज्ञाना तदनन्तरक्षणे साध्यवि- शेषणकानुमितिसम्भवेन सामंजस्यात , विशिष्टसाध्याप्रसिद्धावपि अभाव त्वादिसामान्यलक्षणया तेन रूपेण साध्यज्ञानस्य पूर्वं सम्भवेन सा ध्योपनायकज्ञाननिर्वाहात प्रथमं साध्यविशेषणकाळौकिक प्रत्यक्ष सम्भवा च्च ।

इदन्तु बोध्यं - उक्तरीत्या साध्यविशेष्यकानुमित्यनभ्युपगमेपि निर्वाहे तादृशानुमितिसामग्र्यन्तरा कल्पनप्रयुक्तळाघवानुरोधेन तद- नभ्युपगम उचितः, किं तत्र संसृष्टत्वज्ञान हेतुत्वोपरोधेन । नच- साध्यविशेष्यकानुमित्यभ्युपगमेपि तदुत्तरकाळीनसाध्यविशेषणकानुमि- त्यनुरोधेन क्लृप्तहेतुताकाद्व्यतिरेकपरामर्शादेव कारणतानिर्वाहे कारणताधिक्यविरहा न्न गौरवमिति वाच्यम् ; तदभ्युपगमे तत्र साध्यप्रसिद्धेः प्रतिबन्धकताकल्पनाधिक्येन गौरवात् । एवं -भेदा दिधर्मिकेतरादिरूपप्रतियोगिसंशयात्मक पक्षधर्मिकसाध्यसंसर्गसन्देहा त्संसृष्टत्वज्ञानहेतुतामतेपि साध्यविशेष्यकानुमितिनिर्वाहः, विशेषण तावच्छेदकप्रकारकनिश्चय विरहेण साध्यतावच्छेदकविशिष्टवैशिष्ट्य प्रकारकानुमित्यसम्भवात ।

एतेन संसृष्टत्वज्ञानस्यानुमितिहेतुतामते महानसीयेतरवह्न्यभा- ववान् पर्वत इत्येतादृशेतरबाधबळात् शुद्धवह्नित्वादिना व्यापकता

[दी] चेन्न;- संशयासत्त्वसमये परामर्शोत्पादे सिद्धिसिषाधयिषेविना अनुमि त्यनुत्पादप्रसंगात् , सति विशेषदर्शने संशयायोगादिति ।

---

ग्रहात् महानसीयवह्निमान् पर्वत इत्याकारिकाया विशेष्येविशेषणमिति रीत्या जायमानाया अनुमिते रनुपपत्तिः,तत्र महानसीयत्वविशिष्टवह्न्यादेः प्रागसिद्ध्या तत्संसर्गज्ञानासम्भवात् । नच-वह्नौमहानसीयत्वस्य पर्वतेच वह्ने स्संशयात्मकसंसर्गज्ञाना दनुमितिर्भविष्यतीतिवाच्यं , तथासति विशिष्टविशेषणकानुमितौ विशिष्टसंसर्गज्ञानस्याहेतुत्वे महानसीय वह्निर्नास्तीति बाधग्रहदशायां विशिष्ट वह्न्यादि विशेषणका नुमितिवारणाय बाधग्रहस्य साक्षात्प्रतिबन्धकत्व स्वीका रापत्तिरितिपरास्तं ;- महानसीयवह्निमान् पर्वतइतिवाक्या द्विशेष्येविशे षणमितिरीत्या जायमान शाब्दबोधो यथावान्तरवाक्यार्थभूतमहानसीय वह्न्यादिबोधंविनापि वह्न्यंशे महानसीयत्वसंशयात्मका त्पर्वतेमहानसीय त्वविशेष्यतापन्न वह्निकोटिकसंशयरूपयोग्यताज्ञाना न्निर्वहति तथा तादृशसशयादेवोक्तस्थले महानसीय वह्निमान् पर्वतइत्याकारकानुमिति निर्वाहात् । महानसीयत्वविशिष्टवह्निनिर्णयं विना प्रतियोगितावच्छेदक विशिष्टप्रतियोगि निश्चयरूपकारणाभावा न्महानसीय वह्न्यभावभा नासम्भवेन नोक्तस्थले संशयस्सम्भवतीतिचेत्? एषोनुयोगश्शाब्दबोध स्थलेपि तुल्य स्स्यात् ।

( संशयेति ) साध्यसंशयद्वितीयक्षणे यत्र परामर्शोत्पादः तत्र द्वितीयक्षणे विनश्यदवस्थसंशयादनुमिते रेतन्मतेपि निर्वाहात् ( संशया सत्त्वसमयइति ) सिद्ध्यात्मक परामर्श द्वितीयक्षणे यत्रानुमित्सा तत्र सिद्ध्यात्मक संसृष्टत्वनिश्चयादनुमिते रेतन्मतेपि निर्वाहात् ( सिद्धि सिसाधयिषे विनेति ) सिद्धिरूपसंसृष्टत्वज्ञानं सिसाधयिषा विरहसह कृतं प्रतिबन्धकमिति तदुपगमनिर्वाहाय सिसाधयिषोपादानं । परामर्शा नन्तरोत्पन्न संशयादेव तत्रैतन्मते अनुमितिर्भविष्यतीति शंकान्निराकरो ति ( सतीति )

[दी] एतेन लाघवात् प्रमात्वेन निर्णीयमानं बाधज्ञानं विरोधीतिपरास्तम् । विपरीतमेवलाघवम् । स्फुटतरंच तद्भावसाध्यके । तत्रहि गोत्वाद्यप्रकारकं गोत्वाभावादिप्रकारकं ज्ञानं बाधनिश्चयः । तथाच गोत्वादिमद्विशेष्यक गोत्वाद्यभावप्रकारकत्वज्ञानाभावो भ्रमत्वग्रहविरहः । बाधग्रहश्च

---

ननु भ्रमत्वाग्रहविशिष्टबाधनिश्चयत्वेन प्रतिबन्धकत्वापेक्षया प्रमात्वनिश्चयविशिष्टबाधज्ञानत्वेन प्रतिबन्धकत्वमेव युक्तं, तदभाववति तत्प्रकारकत्वरूपभ्रमत्वाग्रहापेक्षया तद्वति तत्प्रकारकत्वरूपप्रमात्वग्रहस्य लघुत्वात; अस्मन्मते प्रमात्वज्ञाने निश्चयत्वस्येव भवन्मते बाधज्ञाने निश्चयत्वस्य निवेशनीयतया साम्यात ; अभावांशे प्रमात्वेन निश्चीयमानबाधसंशयोपि बाधनिश्चयकार्यकारी , एवञ्च बाधग्रहासत्त्वे तत्प्रमात्वनिश्चयसत्त्वेपि अनुभूयमानानुमिति रप्युपपद्यते, बाधधी प्रमात्वस्य हेत्वाभासताचापि, विशेष्यविशेषणभावे विनिगमनाविरहात्प्रमात्वनिश्चयस्यापि प्रतिबन्धकत्वात् ; यदि बाधज्ञानाविशिष्ट तत्प्रमात्वग्रहे अनुमित्यप्रतिबन्धके तत्प्रमात्वविषयकत्व सत्त्वेन अतिप्रसक्ततया तस्य नदोषता तदा पक्षनिष्ठसाध्याभावविषयकत्वस्यापि अप्रामाण्यज्ञानाऽस्कान्दित ज्ञानसाधारण्येन प्रतिबन्धकतातिप्रसक्ततया दोषत्वासम्भवः, तत्सं-भवस्तु प्रमितसाध्याभाववत्पक्षादेरेवेति शंकान्निराकरोति "एतेने"त्यादिना । "एतेन"-प्रमात्वेनाज्ञायमानेपि बाधग्रहे शाब्दमानसादि ज्ञानानुत्पादानुभवेन । उक्तलाघव मपि नास्ती त्याह ( विपरीतमेवेति ) तदभावनिश्चयत्व घटक तदप्रकारत्वापेक्षया प्रमात्वनिश्चयत्वघटकस्य तद्वति तत्प्रकारकत्वाभावा प्रकारकत्वस्याति गुरुतया भ्रमत्वज्ञानाभावस्यावच्छेदकतामते अभावद्वयनिवेशाधिक्यस्या किंचित्करत्वादितिभावः । भावसाध्यकस्थले बाधग्रहभ्रमत्वघटक साध्याभावाभावस्य साध्यात्मकस्य ताद्रूप्येणैव निवेशात्तादृशस्य भ्रमत्वस्य साध्याभाववति साध्याभाव प्रकारकत्वरूप प्रमात्वापेक्षया लघुत्वेना तिस्फुटतरं लाघवमित्याह ( स्फुटतरंचेति ) ( गोत्वाद्यप्रकारकमिति ) एतेन वक्ष्यमाणप्रमात्वज्ञानीय निश्चयत्वापेक्षया

[दी] पक्षे गोत्वाद्यप्रकारकं ज्ञानम् । तस्य च गोत्वादिमद्विशेष्यकगोत्वाद्यभावप्रकारकत्वाद्यप्रकारकं गोत्वाद्यभावव द्विशेष्यकगोत्वाद्यभावप्रकारकत्वप्रकारकज्ञानं प्रमात्वनिश्चय इति । उक्तप्रायं च तत्तत्कार्यं प्रति प्रतिबन्धकानां कारणानां च

---

बाधग्रहनिश्चयत्वस्य विशेषोपिदर्शितः । नच-प्रमेयत्वादिना गोत्वप्रकारक निश्चयसंग्रहाय गोत्वत्वावच्छिन्नाप्रकारकत्वं निवेश्यं, तथा च गोत्वाभाववान् गोत्वाभावाभाववान् वेति संशयस्य धर्मिणिगोत्वाभावाभावत्वेनैव गोत्वप्रकारकस्या व्यावृत्तिरितिवाच्यं; तादृशसंशये धर्मिणि गोत्वत्वेन गोत्वस्यापि नियमतो भानोपगमात् । तेन रूपेण तदुपस्थिति सत्त्वे तेन रूपेण तद्वत्त्वभाने बाधकाभावात् । " गोत्वादिमद्विशेष्यक गोत्वाद्यभावप्रकारकत्वाद्यप्रकारक " मित्यादिपदात् गोत्वाद्यभावविद्विशेष्यक गोत्वाद्यभावप्रकारकत्वरूप प्रमात्वाभावपरि ग्रहः । भ्रमत्वा प्रकारकत्वाभिधानं तु भावद्वय कोटिक संशयाभ्युपगन्तृ मतावलम्बनेन । ननु-भावरूप साध्याभाव ज्ञानस्य प्रतिबन्धकतायां तदभाववति तत्प्रकारकत्वरूप भ्रमत्व तद्वति तत्प्रकारकत्वरूपप्रमात्वाभावयो स्समशरीरतया विनिगमनाविरहेण द्वयोरेवा ग्रहौ निवेशनीयौ, तदपेक्षया च भ्रमत्वाभाव रूपप्रामाण्यतो लघुशरीर तद्वतितत्प्रकारकत्वरूप प्रमात्वग्रहस्यावच्छेदकत्वे लाघवं ; भावद्वयकोटिकसंशयानभ्युपगमात् तन्निश्चयत्वशरीरे प्रमात्वाभावाप्रकारकत्वमेव निवेश्यते, नतु भ्रमत्वा प्रकारकत्वमिति न तदुभयनिवेशननिबन्धनगौरवमिति शंकायां प्रतिबन्दी माह ( उक्तप्रायं चेति ) "उक्तप्रायं"- उक्तकल्पं । पूर्वमाकांक्षा ज्ञानहेतुप्रतिहेतुपरामर्शादिधर्मिक प्रमात्वनिश्चयस्य कारणत्वप्रतिबन्धकत्वे आपादिते, नतु प्रमात्वनिश्चयविशिष्टानां तेषामिति प्रायपदं । "प्रतिबन्धकानां"- प्रतिहेतुपरामर्शादीनां । "कारणानां"- आकांक्षाज्ञानपरामर्शा

[दी] प्रमात्वेन निश्चीयमानतया तथात्वापत्ति रिति ।
नच सति विशेषदर्शने विपरीतनिश्चयो किंचित्करः, तत्सत्त्वेपि विशेष
दर्शनेन प्रत्यक्षोत्पादादिति वाच्यं; विशेषदर्शनेन तन्नाशानन्तर मेव

---

दीनां ( तथात्वापत्तिरिति ) यथायोगं कार्यप्रतिबन्धकत्वस्य कार्यजनक
त्वस्य चापत्तिरित्यर्थः । तुल्ययुक्त्या प्रामाण्यनिश्चयेपि निश्चित
प्रामाण्यकत्वस्य तत्रापि च तथात्वापेक्षाया मनवच्छिन्नप्रामाण्यग्रह
धारायाः कार्यग्रहविरोधित्वादा वपेक्षिततया स एव न स्यात्, प्रति
बन्धकविशेषणपरम्पराया अनवस्थिति श्चेति तत्र तत्र प्रामाण्यनिश्चयो
यदि नापेक्ष्यते तदा तुल्यं प्रकृतेपीति भावः । अगृहीताप्रामाण्य
कत्वेन प्रतिबन्धकतामतेऽपि तद्घटकाप्रामाण्यग्रहे अनिश्चिताप्रामाण्य
कत्वविशेषणं, तत्र चागृहीताप्रामाण्यकत्वविशेषण मित्येवं क्रमेण
अनवस्थिति रिति तु नाशंकनीयम् ; प्रतिबन्धकीभूत निश्चयविशेषणा
गृहीताप्रामाण्यकत्वघटकाप्रामाण्यग्रहे निश्चिताप्रामाण्यकत्वानिवेशात् ।
तत्रा प्रामाण्यनिश्चयदशायां कार्यवारणाय तदप्रामाण्यनिश्चय
विशिष्टविपरीतनिश्चयादीना मगृहीताप्रामाण्यकत्वानवच्छिन्नानां
प्रतिबन्धकत्वान्तरस्यैव कल्पनीयत्वात् । तादृशाप्रामाण्यनिश्चये चा
निश्चिताप्रामाण्यकत्वाविशेषिता प्रामाण्यग्रहाभावस्य विशेषणत्वोप
गमात । तद्वैशिष्ट्यनिवेशफलस्य प्रतिबन्धकत्वान्तरकल्पनयोपपादनात् ।
दूरस्थेधर्मिणि अयं स्थाणु रित्यादिनिश्चयानन्तरं करादिरूपविशेष
दर्शने सति नायं स्थाणु रित्यादिप्रत्यक्षोत्पत्त्या विशेषादर्शनविशि-
ष्टस्यैव विपरीतनिश्चयस्य प्रतिबन्धकता वाच्या , तथाच परामर्श
सत्त्वे विपरीतनिश्चयेनानुमित्यप्रतिबन्धा त्तदसत्त्वे च कारणाभावा
देवानुमित्यनुत्पत्त्या बाधस्य न हेत्वाभासतेति शंकां निरस्यति
( नचेत्यादिना ) ( विशेषदर्शनेन तन्नाशानन्तर मेवेति ) विपरीत

[दी] प्रत्यक्षोदयात् । परैरपि क्वचि त्प्रत्यक्षविशेष एव विपरीतनिश्चयविशे-
षस्यैव तथात्वोपगमा च्च । नहि शाब्दादिबोधेपि विशेषादर्शनविशिष्ट
त्वेन स विरोधी, गौरवात्, मानाभावा च्च । नवा चाक्षुषादिप्रत्यक्षे

---

निश्चयानन्तरोत्पन्नविशेषदर्शनाधीन विपरीतनिश्चयनाशे सत्येवेत्यर्थः ।
क्षणमात्रस्यातिसूक्ष्मकालतया तद्विलम्बेन फलोपगमे ऽनुभवविरोध
विरहात् । दूरत्वादिदोषजन्यभ्रमस्य विशेषदर्शनोत्पत्तिकाले तदनन्तरं
चासम्भवेन दोषविशेषाधीनशुक्लत्वाद्यभावभ्रमस्थलवन्नात्र विशेषदर्शना
धीनभ्रमत्वग्रहकल्पनापेक्षा, तत्कल्पनेपि क्षणविलम्बस्यावश्यकतया
क्षणविलम्बे सति पूर्वभ्रमनाशस्या वश्यकतया तत एवोपपत्तेरिति
नात्र भ्रमत्वग्रह स्स्वीकृतः । ये पूर्वक्षणे भ्रमसत्वेपि विशेषदर्शन
बला त्प्रत्यक्ष मंगीकुर्वन्ति तेषामपि परोक्षज्ञानप्रतिबन्धकतायां विशे-
षादर्शनवैशिष्ट्यनिवेशो नानुमतः, विपरीतनिश्चयसत्वे सति विशेषदर्शने
शाब्दादिबोधानुपगमादिति बाधस्यानुमिति विरोधित्वं ध्रुव मित्याह (परै
रिति) "प्रत्यक्षविशेष एव"- तदिन्द्रियजन्य प्रत्यक्ष एव । "विपरीतनिश्चय
विशेषस्यैव"-तदिन्द्रियजन्यदोषविशेषाजन्यविपरीतनिश्चयस्यैव। "तथात्वो
पगमात्"-विशेषादर्शनविशिष्टत्वेन प्रतिबन्धकत्वोपगमात् । विशेषोपादान
प्रयोजन माह (नवेति) दोषविशेषजन्यविपरीतज्ञानसत्वे तदनिवर्तकत्वेन
विशेषदर्शनस्या किंचित्करतया तत्सत्त्वेपि समानेन्द्रियजन्यप्रत्यक्षानु
पपत्त्या विशेषादर्शन मपुरस्कृत्यैव तस्य विरोधित्वमिति दोषविशे-
षाजन्यत्वं विशेषपदार्थेन्तर्भावितं । उक्तस्थले ऽयं स्थाणु रिति भ्रमो
त्पत्तिकाले अयं न स्थाणु रिति प्रत्यक्षवारणाय विशेषादर्शनविशिष्ट
दोषप्रतिबन्धकताया आवश्यकत्वेन तद्विशिष्टविपरीतज्ञानप्रतिबन्धकत्व
मफलमिति बोध्यम् ।

ननु - यत्र विपरीतनिश्चयानन्तरं तन्निवर्तकं विशेषदर्शनं, तत्र
विशेषदर्शनस्यो त्पन्नविपरीतज्ञाननाशकतया विपरीतज्ञानान्तरोत्पाद
विरोधितया च प्रत्यक्षनिश्चयोपयोगित्वेपि यत्र शंखत्वादिदर्शनकाले

[दी] मानसादिविपरीतनिश्चयो विरोधी। उपयुज्यते च क्वचिद्विशेषदर्शन मप्रामाण्यग्राहकत्वेन बाधबुद्धेः। नचैवं बाधावतारदशायां पक्षे हेतो रग्रहे ऽज्ञानलक्षणासिद्धिः, ग्रहे च व्यभिचारधी रेवेति वाच्यं; बाधग्रह परामर्शयो र्भेदात्। अभेदेपि पक्षस्साध्यव्याप्यहेतुमान् साध्याभाववांश्चेति

---

दोषविशेषजन्यः पीतत्वादिभ्रमः तत्राप्यनुभवसिद्धमानसादा वपीतत्वादि निश्चये शंखत्वादिदर्शनस्योपयोगित्वं विशेषदर्शनस्योत्तेजकत्वं विना न निर्वहतीत्याह (उपयुज्यते चेति) (अप्रामाण्यग्राहकत्वेनेति) विशेषदर्शनकालीन विपरीतज्ञानानुव्यवसाये तद्व्याप्यवति तद्विपरी तावगाहित्वभानात् तेन हेतुना तत्राप्रामाण्यानुमितिसम्भवादिति भावः। यद्यपि यत्रोक्तक्रमेणाप्रामाण्यानुमिति स्तत्र तस्यानुव्यवसायादिना विनष्टत्वादेव विरोधिता न सम्भवति, तथापि तत्समानविषयक ज्ञानान्तरस्याविरोधित्वाया प्रामाण्यग्रहोपयोग इत्यवधेयम्। साध्या भावविशिष्टपक्षादे र्बाधत्वे "अथ साध्याभाववति पक्ष" इत्यादिपूर्वपक्ष ग्रन्थेन दर्शितानुपपत्ति माशंक्य निराकरोति (नचैव मित्यादिना) "अज्ञानलक्षणा"- जनकज्ञानाभावरूपा (ग्रहे चेति) पक्षे हेतो रित्यनु षज्यते (व्यभिचारधीरेवेति) उभयथाप्यनुमित्यनुत्पादे बाधो किञ्चित्कर इतिशेषः (बाधग्रहपरामर्शयोर्भेदादिति) तथाच पक्षे हेतोर्ग्रहेपि तस्य साध्याभाववत्ता ज्ञानभिन्नतया नव्यभिचारावगाहिता, साध्याभावव द्वृत्तित्वस्य विशिष्टस्य व्यभिचारत्वात्; साध्यभावाविषयकज्ञानस्य विशि ष्टाविषयकत्वात्; एवं साध्याभावज्ञानस्यापि हेतौ तदधिकरणवृत्तित्वा नवगाहितया न तद्घटितव्यभिचारा वगाहिता; खण्डशो दोषघटक पदार्थावगाहिनो ज्ञानस्य च नाविरोधितेति बाधादेव तत्रा नुमित्य नुत्पाद इतिभावः। यत्र परामर्शोपि लौकिकसन्निकर्षात् दोषविशेषाद्वा पक्षेसाध्याभाववत्त्वभानं तत्रापि नव्यभिचारग्रहइत्याह (अभेदेपीति)

[दी] ग्रहस्य परस्परोपरागानवगाहिनो व्यभिचाराविषयकत्वात् । एकत्र व्यभिचाराव्यभिचारयो रेकनिश्चयागोचरत्वात् । पूर्णे च करणे साक्षा दनुमित्यविरोधिनो व्यभिचारज्ञानादे रकिंचित्करत्वात्। उक्तश्च साध्यादेः

---

तयोरित्यादिः (इतिग्रहस्येति)इत्याकारकस्यैव तत्रत्यबाधग्रहस्येत्यर्थः। (परस्परोपरागा नवगाहिन इति) हेतौ साध्याभावविशिष्ट धर्मिवृत्ति त्वस्य साध्याभावविशिष्टे धर्मिणि हेतुमत्त्वस्यचानवगाहिन इत्यर्थः। एतच्च व्यभिचाराविषयकत्वे हेतुगर्भं विशेषणम् । विशिष्टव्यभिचा राभाने च खण्डश स्तद्घटकनानापदार्थावगाहि नानाज्ञानस्यैव विशिष्टा विषयकविशकलितसमूहालंबनस्याप्यनुमित्यविरोधितया बाधएवानु मितिविरोधीतिभावः । ननु- तत्र विशिष्टव्यभिचारभाने किं बाधक मित्यत्राह (एकत्रेति) (एकनिश्चया गोचरत्वादिति) तदुभयभानेनिश्चय त्वस्यैवानिर्वाहात्, तदनिर्वाहे च व्याप्तिनिश्चयाभावेनैवा नुमित्यनुत्पादा दिति भावः ।

ननु- विशिष्टस्य साध्याभाववद्वृत्तित्वादेरिव तद्धर्मिणि साध्याभाव वत्त्वादिनासहितं तद्धर्मिणो हेतुमत्त्वादिकमपि व्यभिचारः, विशक लिततदुभयज्ञानादपि अनुमितिप्रतिबंधस्या नुभाविकत्वा दित्युक्त स्थलेपि व्यभिचारनिबंधन एवानुमित्यनुत्पाद इत्याशंक्याह (पूर्णेचेति) तृतीयलिंगपरामर्शसमवधाने सति परामर्शविघटकतयैवा नुमितिविरो धिनो व्यभिचारस्वरूपासिद्ध्यादिग्रहस्या नुमित्यनुत्पादानिर्वाहकत्वा दित्यर्थः। तथाच तृतीयलिंगपरामर्शसमवधानेसति पक्षे साध्याभावग्रहे तादृशबोधादेवानुमितिप्रतिबंध इति तस्य हेत्वाभासतेतिभावः । यादृश बाधग्रहकाले व्यभिचारज्ञानं ननियतं, तज्ज्ञानस्य व्यभिचारज्ञानासं कीर्णतयापि बाधस्य सार्थक्यं निष्प्रत्यूहमेवेत्याह (उक्तश्चेति)

[दी] पक्षाद्यवृत्तित्वादिक मपि बाधः । नच तद्ग्रहेपि व्यभिचारबुद्धि रावश्यकी । यत्त्वनिश्चितप्रामाण्यस्य ज्ञानस्यार्थनिश्चयरूपत्वे प्रामाण्यनिश्चय वैयर्थ्यं, अतिप्रसंग श्च, तथा च पक्षे साध्याभावज्ञानस्य निश्चयत्व सम्पत्तये पेक्षणीय स्तत्प्रमात्वनिश्चय एव प्रतिबन्धकः, प्राथमिकत्वा दुपजीव्यत्वा च ; नतु चरमभावि तदधीनं व्यभिचारज्ञानं; इति । तत्तुच्छं, तस्य प्रतिबन्धकत्वेनाक्लृप्तत्वात् ; अगृहीताप्रामाण्यकत्वेनैव निश्चयस्य स्वकार्यकारित्वात , अन्यथानवस्थानात् , अप्रामाण्यशंका निवर्तकत्वेन च क्वचित्प्रामाण्यग्रहोपयोगात् , संशयसाधारणस्य व्यभि चारज्ञानस्य विरोधित्वाच्चेति ।

---

"नच"- नहि " तद्ग्रहेपि"- तादृशबाधादिग्रहकालेपि ( व्यभिचारबुद्धि रावश्यकीति ) धर्मिणिसाध्याभाववत्त्वस्येव साध्ये धर्म्यवृत्तित्वस्य व्यभि चाराघटकत्वादिति भावः । साध्याभावबुद्धेः प्रमात्वस्य व्यभिचारज्ञानोप जीव्यज्ञानविषयतया हेत्वाभासत्वमिति यन्मूलोक्तं तद्दूषयितुमुपन्यस्यति (यत्त्विति) "निश्चयरूपत्वे "- तत्कार्यकारित्वे । " अतिप्रसंगः "- गृहीता प्रामाण्यकज्ञानस्य तथात्वप्रसंगः ( तत्प्रमात्वनिश्चय एवेति) विरोध्यविषय कोपीति शेषः ( प्रतिबन्धक इति ) अनुमिता विस्यादिः । प्राथमिकत्वं क्वाचित्क मित्यत ( उपजीव्यत्वादिति ) " नत्वि " त्यादिना व्यभिचारज्ञानस्य साक्षादनुमितिप्रतिबन्धकत्व मेव व्यव च्छिन्नं, व्याप्तिज्ञानविरोधितायाः मविवादात्, अन्यथा व्यभिचारस्य हेत्वाभासतानुपपत्तेः । "तस्य" - पक्षे साध्याभावबुद्धिप्रमात्वनिश्चयस्य । ( अक्लृप्तत्वादिति ) व्यभिचारज्ञानस्यच पक्षातिरिक्ते साध्याभावहेतु सत्तावगाहिज्ञानात् यत्रानुमित्यनुत्पाद स्तत्र प्रतिबन्धकता क्लृप्तेतिभावः। उपजीव्यत्वमपि दूषयति ( अगृहीतेति ) "अन्यथा" - निश्चितप्रामाण्यक-त्वेन तथात्वे । प्रामाण्यग्रहवैयर्थ्य मुद्धरति ( अप्रामाण्यशंकेति ) ( क्वचिदिति ) यत्र कोट्युपस्थित्यादिरूपकारणसमवधानं तत्रेत्यर्थः । "क्वचि"दित्यनेनेदृशोपयोगितायामनवस्था नास्तीति सूचितम् । व्यभिचार ज्ञानस्य साध्याभावांशे निश्चयत्वापेक्षायां प्रमात्वनिश्चयापेक्षा, सैव नास्ती त्यतोपि न प्रमात्वनिश्चयोपजीव्यतेत्याह ( संशयेति ) मूलोक्तानि

[दी] यत्तु - उपनीत कांचनमयत्वविशिष्ट वह्न्यनुमिति विरोधी व्यधिकरण कांचनमयत्वावच्छिन्न प्रतियोगिताको वह्न्यभावो बाधः । नच विशिष्टसाध्याप्रसिद्ध्या कथं तद्विशिष्टानुमितिः, विशेष्ये विशेषणमिति

---

[ग] कतिपयदूषणान्युद्धृत्य सौन्दडमतं परिष्कृत्योपन्यस्यति ( यत्त्विति ) (बाध इति) अस्तीति इत्यादिः । "किंचे" त्यादिमूलोक्तदूषण मुद्धरति ( नचेत्यादिना ) "विशिष्टसाध्याप्रसिद्ध्या"- अनुमितेः पूर्वं कांचनमयत्वरूपविशेषणतावच्छेदक विशिष्टवह्निरूपविशेषणाज्ञानेन । " कथं तद्विशिष्टानुमितिः"- कथं तादृशविशिष्टसाध्यविशेषणकानुमितेः प्रसक्तिः । तथा च कारणबाधादेव तत्र विशिष्टानुमित्यनुत्पादसम्भवात् बाधो किंचित्कर इति भावः ( विशेष्ये विशेषणमितीति )

अयं भावः- विशिष्टविशेषणकज्ञानं द्विविधं - तदुपलक्षितप्रतियोगिक वैशिष्ट्यावगाहि तद्विशिष्टप्रतियोगिक वैशिष्ट्यावगाहि च । आद्ये विशेषणज्ञानासंसर्गाग्रहयो रेवापेक्षा, नतु विशेषणतावच्छेदकप्रकारकधियोपि; अत एव अवान्तरवाक्यार्थज्ञानं विनैव महावाक्यार्थज्ञानमंगीकुर्वन्तीति । नचैवमपि पूर्वं विशिष्टाप्रसिद्ध्यैव विशिष्टप्रतियोगिज्ञानाभावात बाधग्रहो न सम्भवतीति स्वरूपसतो बाधस्याकिंचित्करत्वेति वाच्यम् , प्रतियोगितावच्छेदकविशिष्ट प्रतियोगिज्ञानस्य विशिष्टविशेषणज्ञानविधयैव विशिष्टप्रतियोगिविशेषिताभावबुद्धौ हेतुत्वात् ; कांचनमयत्वेन वह्नि र्नास्तीत्याकारिकायां स्वातन्त्र्येण प्रतियोगितावच्छेदकतया कांचनमयत्वाद्यवगाहिन्या मभावबुद्धौ तदपेक्षाविरहात् । प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वभानमिति नियमस्य व्यधिकरणधर्मावच्छिन्नाभाववादिनो ऽननुमतत्वात् । पूर्वं कथंचिद्विशिष्टसाध्यज्ञानेनापि बाधग्रहो विशिष्टवैशिष्ट्यविषयकानुमिति कारणान्तरसमवधानं च सम्भवतीत्यपि बोध्यम् ।

[दी] न्यायेन तत्सम्भवात । शुद्धसाध्यव्याप्तिग्रहादेव चोपनयसहकारिणा प्रसिद्धविशिष्टसाध्यानुमितिसम्भवात् तदभावो बाधोस्तु । तेन रूपेण व्याप्ते रनुपादानाच्च तथा व्यभिचारो नदोषाय ।

---

[ग] ननु - विशिष्टज्ञानानपेक्षया कथंचिद्विशिष्टज्ञानसम्पत्त्यावा बाधग्रहसम्भवे व्यभिचारोपि गृहीत इति तत एवानुमिति र्न भविष्यतीति किं बाधेनेति दूषण मुद्धर्तुं तत्र कांचनमयत्वा वच्छिन्न वह्न्यभावरूप बाध तादृशाभाववद्वृत्तित्वरूप व्यभिचारग्रहयोः कांचनमयत्व विशिष्ट वह्न्यनुमिति विरोधित्वा विरोधित्वे दर्शयति (शुद्धसाध्येति ) ( अप्रसिद्ध विशिष्ट साध्यानुमितीति)पूर्वाज्ञात कांचनमयत्वादि विशेषितवह्न्यादे रनुमितिसम्भवादित्यर्थः।"तदभावः"-कांचनमयत्वाद्यवच्छिन्नवह्न्याद्यभावः। "बाधोस्तु"- विशिष्टसाध्ये साधनीये बाधरूपप्रकृतहेतुदोषोस्तु । विशिष्ट साध्यव्याप्ति ग्रहाविषयतयेव उपनयादि सहकृत शुद्धसाध्य व्याप्तिग्रहविषयतयापि प्रकृतहेतौ विशिष्ट साध्यभानप्रयोजकतया बाधदशायां तस्य तदनुत्पादकताया बाधप्रयुक्तत्वात् , तादृश बाधग्रहस्य शुद्ध साध्यानुमित्यविरोधित्वेपि शुद्धसाध्येसाधनीये तस्य दोषत्वानुपगमे क्षति विरहादितिभावः। " तेनरूपेण "-कांचनमयत्वादिसहित वह्नित्वादिना। "तथाव्यभिचारः"-काञ्चनमयत्वाद्यवच्छिन्न वह्न्यभाववद्वृत्तित्वं(नदोषायेति) हेत्वधिकरण पक्षातिरिक्तमात्रे काञ्चनमयत्वाद्य वच्छिन्नवह्न्याद्यभाव वत्ताग्रहेपि पक्षे काञ्चनमयत्वाद्यवच्छिन्न वह्न्यनुमित्यनुपगमेनानुमितौ साक्षाद्व्यभिचारज्ञानस्य विरोधित्वेपि काञ्चनमयत्वादिसहित वह्नित्वाद्य वच्छिन्नविधेयताकानुमितावेव तथाव्यभिचारधियो विरोधित्वात काञ्चनमयत्वाद्यवच्छिन्ननिरूपित व्याप्तिज्ञानाजन्यानुमितौ कांचन मयत्वाद्यंशे विधेयतावच्छेदकताख्यविलक्षणविषयता विरहेणोक्त व्यभिचारधियो ऽविरोधित्वादितिभावः ।

अथ - व्यधिकरणकांचनमयत्वाद्यवच्छिन्नवह्न्यभावप्रतीतौ कांचनमयत्वमेव प्रतियोगितावच्छेदकतया भासते, समानाधिकरण

[दी] उपनीतसकलभानेचाप्रामाण्यं प्रत्यक्षेपि तुल्यम् ।

---

[ग] वह्नित्वादिकन्तु प्रतियोगिन्युपलक्षणतयैव, तस्य प्रतियोगितानवच्छेदकत्वात ; एवंच कांचनमयवह्निर्मानित्यनुमितौ कांचनमयत्ववह्नित्वयोः प्रतियोगितावच्छेदकत्व पर्याप्त्यवगाहिबाधग्रहस्यैव प्रतिबन्धकतया नोक्त बाधज्ञानस्य विरोधितेतिकथं सद्देत्वाभासः ? नच उभय धर्मप्रकारेणसाध्यानुमितौ एकधर्मांशेऽवच्छेदकत्वमवगाह्यान्यत्र च प्रति योगितायास्सामानाधिकरण्यात्रगाहित्वेनैव प्रतिबंधकतेति – वाच्यम् , तथासति कांचनमयत्वेन महानसीयवह्निर्नास्तीतिधियोपिकांचनमय वह्निमानित्यनुमितिविरोधितापत्तेः; अधिकंत्वितिन्यायेन इतरसामाना धिकरण्याभावस्य प्रतिबन्धकतायामतन्त्रत्वात ; नच – एकांशेस्व रूपसंबंधरूपस्यापरांशेनातिरिक्तवृत्तित्वरूपस्या वच्छेदकत्वस्यावगाहनं प्रतिबन्धकत्वेतन्त्रम् , ईदृशप्रतिबन्धकत्वस्यक्काप्यक्लृप्तत्वात ; तावतापि कांचनमयत्वेन वह्निघटोभयसामान्यं नास्तीतिज्ञानस्य कांच नमयवह्निमानित्यनुमितिविरोधितया दुर्वारत्वाच्च ;- मैवं – प्रतियो गिविशेषणतया भासमानधर्मस्यापि समानाधिकरणतया व्यधिकरण धर्मावच्छिन्नाभाव प्रतियोगियोगितावच्छेदकत्वोपगमेन काञ्चनमयव ह्निर्नास्तीति भ्रमइव कांचनमयत्वेन वह्निर्नास्तीत्यादिबुद्धावपि कांच नमयत्ववह्नित्वयोः प्रतियोगितावच्छेदकता पर्याप्तिभानांगीकारात । नच – मिळित्वाऽभासमानयोः प्रतियोगिविशेषणतया स्वातंत्र्येणच भासमानयोरुभयो र्मिळितयोः प्रतियोगितावच्छेदकता पर्याप्तिभानं कांचनमयोनास्ति वह्निर्नास्तीत्यादाविवदुर्घटमितिवाच्यम् , एकस्यां प्रति योगिविषयताया मवच्छेदकतया भासमानयोरेव यदुभयधर्मावच्छिन्न प्रतियोगित्वाविषयतया रभावनिष्ठैकाविषयतानिरूपितत्वं तयोर्मिळितयोः प्रतियोगितावच्छेदकता पर्याप्तिभानोपगमात । इत्यलंविस्तरेण ।

"अन्यथा पूर्वोपस्थितसकलभान" इत्यादिमूलोक्त मनुमित्युपनी तभान रूपदूषणमुद्धरति ( उपनीतसकलभानेचेति ) ( प्रत्यक्षेपि तुल्यमिति ) तथाच प्रत्यक्षमात्रस्येदानुमितिमात्रस्यापि किंचिदंशे ऽप्र

[दी] अनुद्देश्यांशे चानुमिते रप्रामाण्यं नवादिविजय प्रयोजकमिति ।

तन्न, प्रत्यक्षेहि विना सन्निकर्ष मभाना दुपनीतभानस्य प्रत्यभि ज्ञादावानुभाविकत्वा दुपनयोपि सन्निकर्षःकल्प्यते । अनुमितौ च फला सिद्ध्या नसामग्र्यन्तरकल्पना ।

---

[ग] मात्वमिष्टमेवेति भावः । तावताचवादिनोनानिग्रह इत्याह ( अनुद्देश्यां शइति ) वादिनो यद्विषयसिद्धि रनुद्देश्या तदंशइत्यर्थः ( अनुमितेरप्रा माण्यमिति ) वादिरूपादितानुमितेः भ्रमत्वमित्यर्थः ( नवादिविजय प्रयोजकमिति ) नवादिकर्मक प्रतिवादिविजय प्रयोजकमित्यर्थः । यत्सिद्धिर्वादिन उद्देश्या तत्साधनपरिपन्थिहेत्वाभासस्यैव निग्रहस्थानत्वा दुद्देश्यांशे अनुमितेरप्रामाण्य एव तादृशदोषसंभवादितिभावः । एत त्समाधानमपि मूलोक्तशंकाक्रमेणाभिहितमित्यवधेयम् । मूलस्थाया अनुमितावुपनीतभानस्या प्रामाणिकत्वोक्तेः विवरणेन बाधकान्तरप्रद र्शनेन च मतमेतन्निराकरोति “ तन्ने ”त्यादिना । प्रत्यक्षेपिज्ञानं यदि विशेषणज्ञानमुद्रया स्वविषयभासकं तदानुमितावपि तस्य तथात्वं दुर्वारमेव, विशिष्टानुभवत्वावच्छिन्नं प्रत्येव विशेषणज्ञानादे र्हेतुतयानुभव सामान्यएव तस्य विषयभासकतासंभवात , अतस्तत्र ज्ञानस्य सन्निक र्षविधयातथात्वं व्यवस्थापयति ( प्रत्यक्षेहीति ) अनुमित्यादौ यदि नोपनीतस्यभानं तदाप्रत्यक्षेपिमास्तु, अविशेषादिति किं ज्ञानस्य सन्निकर्षत्वेनेति प्रतिबंध्युद्धारायाह ( उपनीतभानस्येति ) उपनीतत त्वादिविषयकत्वस्येत्यर्थः । “ प्रत्यभिज्ञादा ” वित्यादिना घटोनास्ति इह सुरभिचन्दनमित्यादि प्रत्यक्षपरिग्रहः(उपनयोपीति)ज्ञानमपीत्यर्थः । “सन्नि कर्ष.”-स्वविषयेमनसस्सन्निकर्षः।“ कल्प्यत ” इत्यस्य विषयभासकत्वे नेत्यादिः । तद्बलान्नोपनीतस्यानुमितौभानं, प्रत्यक्षत्वस्यसन्निकर्षज न्यतावच्छेदकत्वादितिभावः । ननु- अस्तूपनायकज्ञानस्य प्रत्यक्षत्वं कार्यतावच्छेदकम्, तथापि विशेषणज्ञानबाधाद्यभावबला दनुमितावुप नीतं भासतामित्यत आह ( अनुमिताविति ) ( नसामग्र्यन्तरकल्पनेति )

[दी] न खलु वह्निव्याप्यधूमपरामर्शा दुपनीत रासभानुमिति रानुभ विकी कस्यापि । अन्यथा पर्वते वह्निसन्देहवतो निश्चितवह्निव्यभि

---

[ग]अयम्भावः, विशेष्यभासकसामग्रीनिरपेक्षं केवलबाधाद्यभावस हितं विशेषणज्ञानविषया हेतुभूतं ज्ञानं न स्वविषयभासकं, अतिप्रसंगात् ; विशेष्यभासकसामग्रीच प्रत्यक्षानुमित्योरननुगतेति प्रत्यक्षसामग्रीसम वहितमेव तत्तथा, नत्वनुमिति सामग्रीसमवहितं, तादृशस्यतथात्वे कल्पकाभावात् । कांचनमयत्व व्याप्यवान् वह्निः कांचनमय वह्नि व्याप्यवान् पर्वतइत्यादि परामर्शघटित वह्न्यादिभासकानुमिति साम ग्रीतोपि वह्न्यादौ कांचनमयत्वादि विशिष्टबुद्धि रुत्पद्यतइति विशेष्य भासकानुमिति सामग्रीसमवहितमपि कांचनमयत्वादि रूपविशेषण ज्ञानादिकं स्वविषयभासकमिति चेत् ? भवतु तादृश मपितत्तद्विशेषणज्ञा· नादिकं तथा, वह्नि वाप्यवान्पर्वत इत्यादि कांचनमयत्वादि विषयक त्वावच्छिन्ना जनकपरामर्शादिसहित कांचनमयत्वादिज्ञानस्य विषय भासकत्वं तावतापि न सिद्ध्यति । सर्वसाधारणं वह्न्यादिभासकसा- मग्रीत्वं तद्भासकानुमितिसामग्रीत्वंचैकं दुर्वचं, सुवचत्वेपितेन रूपेण न हेतुतेति तेनरूपेण न सहकारितासंभवइति ।

फलासिद्धिमेवविवृणोति ( नखल्विति ) ननु- कांचनमयवह्नि मान् पर्वतइत्यादिमानसे तत्तद्विषयोपस्थिति बाधविशेषाभावादिघ टिता या सामग्री विशिष्टविषयकत्वप्रयोजिका साकांचनमयत्वाद्युप स्थिति बाधविशेषाभावादिसहिता वह्न्यादिव्याप्यवत्तापरामर्शसम वधानकाले प्यक्षतैव, तादृशज्ञानेमानसत्वप्रयोजिकायामेवसामग्र्यामनु मिति सामग्रीरूपप्रतिबंधकाभाव निवेशात्, तत्तद्विशिष्टविषयावगाहिता प्रयोजकशरीरे प्रयोजनविरहेण तदनन्तर्भावात् ; नच - सामग्री प्रविशिष्टविशेष्यज्ञानस्य मानसानुमित्योर्नैकरूपेण हेतुतेति कथं तादृश सामग्र्या अनुगतरूपेणोभयत्र विशिष्ट विषयकत्वेप्रयोजक

[दी] चारकेण अभिधेयत्वादिना पर्वतादौ प्रमेयत्वादिकमनु मितोऽपि वह्न्यर्थिनो वह्निमत्त्व निश्चया न्निष्कम्प प्रवृत्त्यापत्तेरिति ।

---

[ग] नेति वाच्यम्, प्रत्यक्षनिष्ठोपनायक ज्ञानजन्यतायामपि अनुमितिसाधारणालौकिकज्ञानत्वस्यैवा वच्छेदकत्वोपगमेन मानसानुमित्योरेक रूपेणाविशिष्टज्ञानहेतुत्वानपायात ; नच - प्रत्यक्षत्वापेक्षयाऽलघोर्ज्ञानत्वस्य उपनायकज्ञानजन्यतावच्छेदत्वं निर्युक्तिकम्, तुल्यशरीरत्वेऽपि विनिगमनाविरहेण उभयोस्तथात्वस्या प्रत्यूहत्वात ;- इत्याशंक्यानुमितावुपनीतभाने बाधकमाह (अभिधेयत्वादिनेति) ।

इदमापाततः - प्रमेयत्वाद्यनुमितिपूर्वं वह्न्याद्युपस्थितिसत्त्वेनुमित्यनुव्यवसायदशायां पर्वतादौ मानसवह्न्युपनीतभानस्य सर्वमत एव दुर्वारतयावह्न्याद्यर्थिप्रवृत्तेः क्षणैकविलंबेनावश्यकत्वात् । यदाचत दभावस्याप्युपस्थितिः तदातस्यापि प्रत्यक्षेतत्तद्धर्मिगततया मानसंभवेन यथानतन्निश्चयरूप प्रत्यक्षं तथानुमितावपि तदभावस्य तथा भाने नतन्निश्चयरूपानुमितिरिति प्रवृत्तिप्रसंगेसमाधानंतुल्यम् । त द्व्याप्यवत्ताज्ञानाजन्य उपस्थितिबाधाभावमात्राधीने तन्निश्चयेऽप्रामाण्य शंकासंभवेन न तदर्थिप्रवृत्तिरित्यपि समाधानं सममेव । यत्तु - असत्यपिबाधाद्यवतारे उपस्थितानां सर्वेषां धर्माणां न सकलोपस्थित तद्धर्मिषुभानमिति यदा यद्यज्ज्ञान व्यक्तितो यत्रयत्रधर्मिणि यद्यद्धर्मस्य उपनीतभानं प्रामाणिकं तत्तज्ज्ञानव्यक्ते रननुगतरूपेण तत्तदुपनायकता स्वीकार्या, तथाच फलाभावान्नकस्यापि ज्ञानस्यानुमितौ साध्याद्यंशे स्वविषयधर्मान्तरभासकत्व मुपेयत,इत्यनुमित्युपनीतभानखण्डनम् ; तदपि नसत्, एवंसत्युपनीतभानप्रत्यक्षे बाधादिबुद्धेः प्रतिबंधकताविलय प्रसंगात , बाधज्ञानकालीनस्य उपनायकत्वाकल्पनेनैव तदानीमुपनीतवारणसंभवात् ; पुरुषविशेषस्योपनीत विषयविशेषभानेऽनुगत रूपेण उपनायकज्ञानहेतुतासंभवाच्चेति ।

[दी] (पक्षधर्मताबलेनेत्यादि) ननु विशेषतो व्याप्तयग्रहान्न तथा सिद्धि सम्भावना, सामान्यतः सिद्धौ न विशेषतोबाधो विरोधी, भिन्नप्रकार त्वात् । नच समानविषयकत्वमेव विरोधित्वेतन्त्रं, पृथिव्यादिरूपबाध

---

[ग] इदन्तुबोध्यम्-अनुमितावुपनीतभानस्वीकारे वह्न्याद्यवृत्तिकांच न मयत्वादिनेव तद्वृत्तिमहानसीय वह्नित्वादिनापि पर्वतादौ वह्न्या द्यनुमितेः शुद्धवह्निव्याप्यवत्तापरामर्शतस्संभवेन तद्विरोधितया समानाधिकरण महानसीय वह्नित्वावच्छिन्नाभावरूपबाधस्यापि असं कीर्णदोषतादुर्वारेति वह्निव्याप्यधूमवान् पर्वतइत्यादि परामर्शा न्महानसीयवह्न्यादि बाधादेव नपर्वतादौ भासतइति बाधस्य पृथग्दोष त्वमिति ।

"पक्षधर्मताबलेने" त्यादि मूलोपदर्शितसिद्धांते उपाध्यायोक्तदूषण माशंकते ( नन्विति ) " विशेषतः " - महानसीयवह्नित्वादिना । " तथासिद्धिः " - तादृशविशेषधर्मप्रकारिका सिद्धिः । " सामान्यतः " व्यापकतावच्छेदकवह्नित्वादिना । " विशेषतोबाधः " - महानसीयव ह्नित्वाद्यवच्छिन्नाभावग्रहः । " भिन्नप्रकारकत्वात् " - अभावप्रति योगितावच्छेदकतया ग्राह्यतावच्छेदकरूप प्रकारानवगाहित्वात् । समानप्रकारकत्वस्यैव प्रतिबंधकतायां तन्त्रत्वादिभावः ( समान विषयकत्वमेवेति ) अभावप्रतियोगितावच्छेदकतया ग्राह्यवृत्तिधर्माव गाहित्वमेवेत्यर्थः । नत्वभावप्रतियोगितया ग्राह्यविषयकत्वमेवेत्यर्थः, वह्निर्नास्तीति सामान्याभावबुद्धौ महानसीयवह्न्यादेः प्रतियोगित याऽभाने महानसीयवह्न्यादिज्ञानविरोधितानुपपत्तेः । नच-सामान्यप्रत्या सत्तितः सामान्याभावबुद्धौ सकलप्रतियोगिभानंनियतं, सामान्यज्ञान सत्त्वेपितत्प्रकारकलौकिक प्रत्यक्षसामग्र्यसत्त्वे सकलसामान्याश्रयभाना संभवात्; अनुपस्थितव्यक्तीनां विशेषणज्ञानरूपकारणविरहेणाभावांशे प्रतियोगितयाप्रकारत्वायोगाच्च । एवकारेण समानप्रकारकत्व

[दी]ग्रहेपि वायूरूपवान्नवेति संशयात्। रूपवानित्यनुमितेश्च। नचारूप मेव रूपत्वेन शंकितमारोपितं वा तद्विषयः, तादृशशंकाविरहेपि तयोरानुभाविकत्वात। दोषवशान्निह श्वेतं द्रव्यमिति भ्रमेपि इह पीतः शंखइति प्रत्ययात् ;

---

[ग]तन्नताव्यवच्छदः। अनुमितावेवचेत्समानविषयकत्वेन विरोधितोच्यते, तत्राह (रूपवानित्यनुमितेश्चेति) "अरूपं"- रूपभिन्न (शंकितमारोपितंवेति) वाकारोनास्थायां। रूपत्वांशे निर्धर्मितावच्छेदककतदवच्छिन्नविशेषणता कबुद्धौ रूपत्वप्रकारकज्ञानत्वेन तन्निश्चय तत्संशययोर्द्वयोरेव हेतुत्वात। "तयोः"-संशयानुमित्योः (आनुभाविकत्वादिति) तथाचतत्रानायत्यारूप विषयकत्वस्य स्वीकरणीयतया समानविषयकत्वेन विरोधितायां तदनुप पत्तिरितिभावः। ननु - पूर्वं रूपत्वेनारूपज्ञानविरहेपि तादृशसंशयादौ विशेष्यविशेषणभावरीत्या धर्मिविशेषणतया भासमाने रूपे रूपत्व भानं सम्भवतीत्याशंक्य बाधकान्तरमाह ( दोषवशादिति ) ( श्वेतं द्रव्यमिति ) द्रव्यपदं श्वेतपदस्य धर्मिपरतालाभाय ( इहपीतइति ) यद्यपि ग्राह्यशंखवृत्ति शुक्लत्वावच्छिन्नाभावग्रहे इहशंखइति पीतत्वाविषय कज्ञानस्यानुपपत्तिः, तथापि भ्रमस्य साक्षात्कारित्वज्ञानविरोधिताप्रयो जकपित्तादिदोषजन्यतया श्वैत्यप्रकारेण शंखग्रहस्य तत्रानुत्पत्त्याशंखग्र हे श्वैत्याविषयकत्वस्यलाभाय " पीत इति " ( प्रत्ययादिति ) सा क्षात्कारिप्रत्ययादित्यर्थः। अत्रशंखत्वेनासन्निकृष्टस्य उपनीतशंखस्यन भानोपगमसम्भवः, शंखंसाक्षात्करोमीत्यनुभवात् ; नापि लौकिकसन्नि कर्षाश्रयस्य कस्यचिदशंखस्य, तदानीं तत्राशंखत्व साक्षात्कारसामग्री सत्त्वेनशंखत्वग्रहासम्भवात् ; अतस्तत्र शंखत्वेन शंखस्यैव भानमं गीकार्यं, तच्चशुक्लत्वावच्छिन्नाभाव ग्रहदशायां भवन्मते न संभव तीतिभावः। ननु -तत्रपित्तादिना प्रतिबन्धात् शंखादौ श्वैत्याद्यग्र हेणैव इहश्वेतश्शंखइति साक्षात्कारविरहोपपत्तेः, दोषनाशेच सति

[ द्वौ ] घटपटौ नस्तः दण्डीचैत्रोनास्तीति ग्रहेपि घटोस्ति चैत्रोस्तीत्यवगमात् ।

---

[ग] तादृशभ्रमसत्त्वेपि तादृशसाक्षात्कारोपगमसंभवा द्दोषविशेषजन्यभ्रमस्य लौकिकप्रत्यक्षप्रतिबन्धकत्वं सविवादमित्याशंक्य बाधकान्तरमाह ( घटेति ) व्यासज्यवृत्तिपर्याप्तधर्मावच्छिन्नाभावग्रहस्य प्रतिबंधकत्वोपगमे द्वौ नस्तइत्यत्र परंपरासंबंधेन द्वित्वाभावस्य विषयत्वोपगंतृमतेच घटपटौ नस्त इत्यादिग्रहे घटोस्तीत्यादिज्ञानस्य नानुपपत्तिरित्यतो विशिष्टाभावग्रहदशायां विशेष्यप्रतीतिपर्यंतानुपपत्तिप्रदर्शनम् ।

यद्यपि विशेष्यवति विशिष्टाभावप्रत्ययस्य विशेषणाभावावगाहित्ववादिनां प्राचांमते नेयमनुपपत्तिः; वस्तुतस्तु समानप्रकारकत्वेन विरोधितामतेपि दण्डविशिष्टचैत्रोनास्तीति ग्रहदशायां दण्डोपलक्षितचैत्रवत्ताप्रत्ययस्य समानप्रकारकस्यानुपपत्ति रित्युपलक्षणंभिवतद्धर्मप्रकारक प्रतियोगिमत्ताग्रहे तद्धर्मविशिष्टाभावीय प्रतियोगिताविलक्षणतद्धर्मावच्छिन्न प्रतियोगिताविषयकाभावग्रहस्य तद्विशिष्टप्रतियोगिमत्ताग्रहे च विलक्षणप्रतियोगिमत्तावगाहि विशिष्टाभावग्रहस्य प्रतिबंन्धकतावाच्या; तथाच समानविषयकत्वेन विरोधितामतेपि तद्वत्ताग्रहसामान्यविरोधितायां विशिष्टाभावीय प्रतियोगिताविलक्षण तद्वृत्तिधर्मावच्छिन्न प्रतियोगितावगाहित्वं विशिष्टवैशिष्ट्य प्रत्ययविरोधितायाञ्च विशिष्टाभावीयविलक्षण प्रतियोगितावगाहित्वं तन्त्रमित्युक्तौ नोक्तदोषावसरः; तथापि तन्मते तद्वत्ताज्ञानं प्रति वास्तवतद्वृत्तिधर्मावच्छिन्नप्रतियोगितावगाहित्वेन प्रतिबंधकत्वेन पीतोनास्तीतिग्रहे पीतश्शंखोस्तीत्याद्यानुमानिक प्रतीत्यापत्तिः, पीतत्वस्यवस्तुतश्शंखावृत्तित्वात; शुक्लत्वस्य शंखावृत्तित्व भ्रमदशायां शुक्लोनास्तीतिभ्रमे तादृश प्रतीत्यनुपपत्तिश्चेति तद्वृत्तित्वस्थाने तद्वृत्तितयागृह्यमाणत्वं विशेषणं देयं,

[ दी ] सल्लिंगपरामर्शा द्बाधितविशेष भानप्रसंगश्च विशेषबाधा वतारानवतारयोः समानः, समानसमाधानश्च ।

---

[ग] तथाच कालान्तरीयपुरुषान्तरीय ज्ञानव्यावर्त्तनाय तत्तत्कालपुरुष निवेशेन महागौरवं दूषणं बोध्यम् ।

नच- समानप्रकारकत्वेन विरोधितामते घटत्वपटत्वादिरूपप्रकारा न्तर्भावेण विरोधिताना माधिक्यमिति गौरवमितिवाच्यम् , समानविषय कत्वेन बिरोधितामते प्युक्तक्रमेण ज्ञानव्यक्तिभेदेन प्रतिबंधकताभेदादति गौरवात् । वायौरूपविशेषाभावकूटग्रहदशायां वायौ रूपान्यत्किमपिना स्तीति भ्रमसत्त्वे वायूरूपवान्नवेति संशयादे रनुपपत्तिरपि तन्मतेद्रष्टव्या ।

ननु - समानप्रकारकत्वेन विरोधित्वे पर्वतेमहानसीयवह्निर्ना स्तीत्यादि विशेषबाधावतारदशायां सल्लिंगपरामर्शा द्वह्नित्वादि सामान्यधर्मप्रकारेण पर्वतादौ महानसीयवह्न्यादिविषयक भ्रमानुमिति प्रसंगः, समानविषयकत्वेन विरोधित्वेच तद्भासकेतरबाधादिसत्त्वेपि विशेषबाधादेव नतत्र तद्भानप्रसंगइत्यतआह ( सदिति ) ( विशेषबा धावतारानवतारयोः समानइति ) समानप्रकारकत्वेन विरोधितामते यथा विशेषबाधावतारदशायां तत्प्रसंगः तथा समानविषयकत्वेन विरोधितामते विशेषभासकेतरबाधाद्यसत्त्वेपि विशेषबाधानवतारदशायां तत्प्रसंगोस्ती त्यर्थः ( समानसमाधानइति ) यथासमानविषयकत्वेन विरोधिता मते बाधितेतरबाधाद्यसत्त्वे विशेषबाधानवतारे तादृशेतर बाधादि रूपदोषविरहादेव तादृशभ्रमानुमितिविरह इतिसमाधानं तथा समा नप्रकारकत्वेन विरोधितामतेपि तदेव समाधानमित्यर्थः ।

समानप्रकारकत्वेन विरोधितामतेपीतरबाधादितः विशेषरूपेणैव पक्षे बाधितविशेषभानमभ्युपगम्य बाधासंकरस्य व्यवस्थाप्यतया तन्मते उक्तरीत्या नातिप्रसंगवारणसंभवः, तादृशबाधादिरूप दोषस्य

[दी] अत्र वदन्ति – व्यापकतानवच्छेदकमपि रूपं लाघवज्ञानादि सहकारिवशा दनुमितौ प्रकारीभवति। यथा जीवनमरणान्यतरप्रतियोगी। प्राणित्वादित्यत्र जीवनप्रतियोगित्वम् ।

---

[ग] सामान्यरूपेण बाधितविषयकानुमिता वहेतुतया तादृशदोषविरहस्य तादृशभ्रमानुमिति विरहाप्रयोजकत्वात् ; तथापि तन्मते सामान्यरूपक्ष पक्षबाधितविशेषानुमित्यप्रसिद्धया तत्सामग्र्यकल्पनेन न तत्प्रसंगः । प्रत्यक्षप्रसिद्धस्य सामान्यरूपेण बाधितविशेषभानस्यानुमितावभावस्तु तादृशप्रत्यक्षसामग्रीविरहप्रयोज्य एवेति । यद्यपिसाध्यतावच्छेद कप्रकारेणा प्रसिद्धमिव प्रसिद्धमपि साध्यं धूमगोत्वादिकं साधये दिति मूलेलेखनात्साध्यतावच्छेदकवह्नित्वादिप्रकारक बाधितविशेष सिद्धिविरोधितया बाधस्यहेत्वाभासत्वं मूलकाराभिप्रेतं, तथापि स मानविषयकत्वेन विरोधिताया विचारासहत्वात् तामुपेक्ष्य सहकारि विशेषवशा द्व्यापकतानवच्छेदकप्रकारेणापि साध्यस्यानुमितौ भान मभ्युपगम्य .समाधत्ते ( अत्रवदन्तीत्यादि ) " लाघवज्ञाना " दीत्यादिना एकविशेषबाधपरिग्रहः ( प्रकारीभवतीति ) साध्यांशइत्यादिः । अत्रापसिद्धान्तशंकामपनिनीषु र्मणिकारसंमति मादर्शयितुं यत्रतस्यापि व्यापकतानवच्छेदकप्रकारकत्वमनुमतं तथाविधदृष्टान्तद्वयमाह"यथे"त्या दिना (इत्यत्रेति ) व्यतिरेकिग्रंथे मणिकारोपदर्शित बहिस्सत्त्वसाधक लिंगविशेषणासिद्धिपरिहारफलकानुमानइतिशेषः। "जीवनप्रतियोगित्व" मितिभावप्रधानं। व्यापकतानवच्छेदकमपि साध्यांशे लाघवज्ञानबलादन्य तर प्रतियोगित्वांशे प्रकारीभवतीत्यनुषंगादिनान्वयः। ननु - तत्रान्यतर प्रतियोगितात्वरूपव्यापकतावच्छेदकप्रकारेणैव लाघवज्ञानबलाद्विशेषस्य जीवनप्रतियोगित्वस्यासिद्धिः, नतुताद्रूप्येण; नचैवं - लाघवज्ञानस्यानुप योगः–परामर्शस्यैव सामान्यरूपेणा बाधितविशेषानुमापकत्व संभवादिति वाच्यम्, अपरविशेषभाननिवृत्तौ लाघवज्ञानस्योपयोगात् ; यद्विचबा

[ दी ] अन्यथा जीवित्वेसति गृहासत्त्वस्य हेतोरसिद्ध्या बहि स्सत्तानुमानायोगात् । एवं क्षित्यादिकर्तु रेकत्वमपि । अन्यथा एको नेको वा क्षित्यादिकर्तेति सन्देहप्रसंगात् ।

---

[ग] धितविशेषभासक लाघवज्ञानरूपदोषविरहादेवा बाधितविशेषधर्मिक लाघवज्ञानदशायां तादृशविशेषभानासंभवात् अबाधितविषयक लाघव ज्ञानस्योपयोगिता न घटते, तदाभवतु तदनुपयोग्येव, बाधितधर्मिक लाघ वज्ञानमेव तद्धाननियामकतया अबाधितभानप्रतिबंधकतया चोपयुज्यता मित्यतआह (अन्यथेति).(बहिस्सत्वानुमानायोगादिति)यत्रज्योतिश्शास्त्राव धारितनियमा त्समयविशेषजन्यत्वादिरूपलिंगा द्देवदत्तस्य शतवर्षजीवि ताप्रथममवधारिता, अनन्तरंच भूयोभूयोगृह एव दृष्ट्वा शतवर्षजीवीगृह एवेतिनियमोवधारितः, ततःकदाचिद्योग्यानुपलब्ध्या गृहेतदभावं निश्चि त्य प्रतिसंधत्ते देवदत्तस्य शतवर्षजीवित्वेतदुपपादकं बहिस्सत्त्वमावश्यक मिति गृहएवेति नियमो नसंभवति, तादृशनियमसत्त्वेच मरणस्यावश्यक तया तादृशजीवित्वनिश्चायक नियमोनसंभवतीति तादृशनियमग्रहोऽप्रमा किंवा एतादृशनियमग्रहएवेति देवदत्तोजीवति मृतोवेति, तत्र मरणापेक्षया जीवित्वे लाघवग्रहेसति जीवित्वोपपादक बहिस्सत्त्वसिद्धेरनुमानतो निर्वा ह्यादित्यर्थः । तथासति संशयकरणकार्यापत्ते निराकरणं नोपपद्यतइति भावः । ननु -तत्र सामान्यरूपेण जीवित्वसिद्ध्यैव विशेषसंशय निवृत्तौ मानसोहेतुसिद्धिरित्यपि मणिकाराभिप्राय स्संभवतीति समानविषय कत्व प्रयुक्तविरोधित्वाभिप्रायकतयापि तन्मूलव्याख्यासंभवात् अनुमिते र्व्यापकतानवच्छेदकप्रकारकत्वस्य मणिकारानुमतत्वन्नलभ्यत इत्यनुशये न दृष्टान्तान्तरमनुसरति(एवमिति ) (क्षित्यादिकर्तुरेकत्वमपीति)ईश्वरानु मानइत्यादिः । प्रकारीभवतीत्यनुषंगादिनान्वयः । तत्रैकत्वस्य प्रकारत्वेचे श्वर एकत्वानेकत्वयो र्नित्यसंशयइति पूर्वपक्षयित्वा लाघवस्य प्रमाणसह कारितया सिद्धान्तं प्रणयतो मणिकृतोनुमतां युक्तिमाह ( अन्यथेति )

[ दी ] अनुमितेश्च ताद्रूप्येण लघ्वर्थाविषयकत्वे तथाविधानुव्यव सायविरहात् सतिलाघवप्रतिसन्धाने लघ्वर्थपरिच्छेदकत्वमनुमानस्येत्यपि नसिद्ध्येत । इत्थञ्च विशेषतोजायमानानुमिति विरुणद्धि बाध इतिबाधः

---

[ग] क्षितिकर्तुरेकत्वञ्च नक्षितिकर्तृनिष्ठ भेदाप्रतियोगित्वं, अन्यत्र तदप्रसिद्धेः; क्षितिकर्तरिचलाघवज्ञानं विनातदप्रसिद्धेः अनुपस्थिते तत्रलाघवज्ञानासंभवात । नच - द्व्यणुकादि कर्तरि अंकुरादि कर्त्रभेदएव क्षित्यादिकर्तुरेकत्वम्, अंकुरादिकर्त्रभेदश्चां कुरादिक र्तरिसिद्धे तत्रैवप्रसिद्ध्यतीत्युपस्थिते तत्रैव लाघवज्ञानसंभवेन तत्स हकृतद्व्यणुकादिपक्षक सकर्तृकत्वानुमानात् द्व्यणुककर्त्रादौ अंकु रादिकर्त्रभेदरूपं कर्त्रैकत्वं सिद्ध्यतीति - वाच्यम् , कार्यत्वादिर्लि गेनांकुरादौ विशिष्यसकर्तृकत्वस्य प्रथमतः सिद्धावपि प्रत्येक मंकुरादा वुभयकर्तृकत्वसंशयसंभवेन तत्कर्तृनिष्ठभेदाप्रतियोगित्व सिद्ध्यसंभ वात् । किन्तु आत्मानात्मोभयावृत्ति दुःखवदवृत्ति द्वित्वशून्यत्वं तत । तादृशद्वित्वं आत्मेतरद्रव्यद्वये प्रसिद्धं तच्छून्यत्वंच गुणादाविति ।

ननु - लाघवात्सामान्यरूपेणैव लघ्वर्थविषयिणी अनुमितिरस्तु, नतु व्यापकतानवच्छेदकधर्मेण, लघ्वर्थविपरीतसंशयश्च लघ्वर्थधीरेव निवर्त यिष्यतीत्याशंक्य युक्त्यन्तरमाह ( अनुमितेश्चेति ) ( ताद्रूप्येणेति ) लाघवधीविषयतावच्छेदकमहानसीय वह्नित्वादिरूपेणेत्यर्थः । " तथा विधानुव्यवसायविरहात् "- महानसीयंवह्निमनुमिनोमीत्यनुव्यवसाया सम्भवात् ( नसिद्ध्येदिति ) तथाच वह्निमनुमिनोमीत्यादिप्रतीतेः वह्निविषयकत्वादिमात्रसाधकतया विशेषतो महानसीय वह्न्यादिविषयक त्वसाधकप्रतीतिविरहादितिभावः । भवतु लाघवज्ञानादिवशात व्याप कतानवच्छेदकप्रकारेण साध्यानुमितिः, तावता किमायातमित्याकां क्षायामाह ( इत्थंचेति ) महानसीयवह्न्यादौ लाघवामित्यादि लाघव ज्ञानसहकृता द्वह्निव्याप्यवान् पर्वतइतिपरामर्शात् महानसीयवह्न्यादि

[ दी ] पृथक् । सल्लिङ्गपरामर्शात् कथं भ्रान्तानुमिति र्जायतां; नजायेतवा कथ यथार्थेतिचेत् ? बाधानवतारे बाधितार्थे लाघवज्ञानादोषादेव,

---

[ग] बाधाग्रहदशायामिव तद्ग्रहदशायामपि पर्वतो महानसीयवह्निमानित्यनुमितिस्स्या द्यदिनासौ प्रतिबन्धकोभवेदितिबाधः पृथग्दोषइत्यर्थः । शंकते ( सल्लिंगपरामर्शादिति ) ( कथं भ्रान्तानुमितिरिति ) दोषविरहादितिभावः ( नजायतवा कथं यथार्थेति ) अनुमितिरित्यनुषज्यते । गुणरूपकारणसत्त्वादितिभावः । उभयत्रैक मुत्तरमाह ( बाधानवतारइति) असल्लिंगपरामर्शाभावेपि बाधानवतारसहकृता द्वास्तवबाधितार्थविषयक लाघवज्ञानरूपात दोषाद्धेतोरेव भ्रान्तानुमितिः बाधग्रहरूपोत्तेजकाभावविशिष्टताहशदोषरूपप्रतिबन्धकसत्त्वात प्रमानुमित्यनुत्पाद श्चोपपद्यत इत्यर्थः ।

यद्यपि भ्रमरूपपरामर्शविरहेपि ग्राह्याभाववद्विशेष्यकव्याप्यवत्ताज्ञानरूपा सल्लिंगकपरामर्शः तत्राक्षतएव, तथापि नतन्मात्रात्पर्वतादौ महानसीय वह्न्यादिभानमिति लाघवज्ञानस्यदोषताया आवश्यकत्वे तस्य तथात्व मप्रामाणिकं । नच-लाघवज्ञानंविनापि महानसीय वह्निव्याप्यवान् पर्वतइत्यादि परामर्शा द्भ्रमानुमित्युत्पत्त्या ताहशपरामर्शस्यापि दोषत्व मावश्यकमितिवाच्यम् , सर्वसाधारणपरामर्शत्वस्यैकस्याभावात , पर्वत विशेष्यक महानसीय वह्न्यनुमितौ तद्विशेष्यकमहानसीय वह्नित्वावच्छिन्ननिरूपित व्याप्तिविशिष्टहेतुमत्तापरामर्शस्यहेतुत्वेपि महानसीयवह्न्यभाववद्विशेष्यक शुद्धवह्निव्याप्यवत्ताज्ञानत्वेन हेतुत्वाकल्पनात । परामर्शलाघवज्ञानयो र्जन्यतावच्छेदककोटा वव्यवहितोत्तरत्वनिवेशा ल्लाघवज्ञानजन्यानुमितौ महानसीय वह्निव्याप्यवत्ता परामर्शस्य तज्जन्यानुमितौ च लाघवज्ञानस्यनव्यभिचारः ।

केचित्तु- लाघवज्ञानोपनीत महानसीयत्वादौ नविधेयतावच्छेदकतारूपाविलक्षणविषयता स्वीक्रियते, अपितु प्रकारतामात्रं; पर्वतोवह्नि

मानित्यादि सिद्धिदशायां तादृशानुमिति नजायतएव, महानसीयत्र
ह्निव्याप्यवत्तापरामर्शजन्यानुमितौ च महानसीयत्वसहितं वह्नित्वमेव
विधेयतावच्छेदकमिति कार्यवैचित्र्यान्नपरस्परं व्यभिचारइत्याहुः । तन्न,
लाघवज्ञानादधिकविषयकानुमितेः साध्यतावच्छेदकावच्छिन्न प्रकारक
सिद्धिप्रतिबध्यत्वे देवदत्तजीवनमरणा न्यतरप्रतियोगित्व सामान्यनिश्च
यदशायां लाघवज्ञानाज्जीवित्वस्य विशेषतो सिद्ध्या बहिस्सत्त्वानुमा
नानुपपत्तेः । एवंच तादृशसिद्ध्यभावा घटितलाघवज्ञानसहकृतसामा
न्यधर्मावच्छिन्न व्याप्यवत्ताघटितसामग्र्याः भिन्नविषयक प्रत्यक्षादौ
प्रतिबन्धकताधिक्यं प्रामाणिकत्वान्नदोषायेतिसंक्षेपः ।

वह्निव्याप्यधूमवान् पर्वतइतिपरामर्शात महानसीयवह्नौ लाघ
वमिति लाघवज्ञानदशायां महानसीयवह्निभिन्न वह्न्यभाववानित्या
दीतरबाधग्रहदशायां च पर्वतादौ बाधितमहानसीय वह्न्याद्यनुमिति
र्बाधानवतारदशायां जायते, नतु तदवतारदशायामिति विशेषबाधो
संकीर्णतयाहेत्वाभासः, सामान्यधर्मावच्छिन्न साध्यकानुमितौ विशेष
व्यभिचारस्या दोषत्वादितिमाणिकृतः ।

अत्रोपाध्यायाः – लाघवज्ञानादिसत्त्वेपि व्यापकतावच्छेदकतया
गृहीतेनैव रूपेणानुमितिरिति महानसीय वह्नित्वादिना न महानसीय
वह्न्यनुमितिर्जायते । अपितुशुद्धवह्नित्वादिनैव । तत्रमहानसीय
वह्न्यभावधीर्न विरोधिनी, द्वित्वावच्छिन्नाभाव निश्चयदशायामपि
प्रत्येकं संशयादेरनुभवसिद्धतया ग्राह्यतावच्छेदकावच्छिन्नाभाव निश्चय
स्यैव विशिष्टधीविरोधित्वात् । अतोनविशेषबाधसंभवः । नच-बाधबुद्धेः
प्रतिबंधकतायां समानप्रकारकत्वस्य तन्त्रत्वे लाघवज्ञानादि जन्यम
हानसीय वह्न्याद्यनुमिति र्यदि शुद्धवह्नित्वादिनैव तमवगाहते तदात
दनन्तरं महानसीयवह्निमान्नवेति संशयस्स्यादिति लघ्वर्थभासकमपि
लाघवज्ञानमनुपयुक्तंस्यादिति समानविषयकत्वेन बाधबुद्धेर्विरोधित्व
मनुमितौ विशेषरूपेण लघ्वर्थविषयकत्वं वावश्यकमित्युभयथैव विशे

षबाधोहेत्वाभासोभवेदितिवाच्यम् , लाघवज्ञानस्यैव तादृशसंशयविरोधित्वात्; लाघवज्ञानजन्यानुमिति नाशानन्तरमिव लाघवज्ञाननाशानन्तरमपिक्षणं संशयोपगमे क्षतिविरहादिति ।

अपरनव्याः - लाघवज्ञाननाशे लाघवज्ञानजन्यानुमितिसत्त्वेपि यद्युक्तसंशयस्स्वीक्रियते तदालाघवज्ञानस्य लघ्वर्थभासकत्वमेवोच्छिद्येत, तज्जन्यानुमितौ लघ्वर्थाविषयतायाव्यर्थत्वात । नच - तस्याः फलान्तरासत्त्वेपि लघ्वर्थविषयकत्वेनानुमिते रनुव्यवसाया लघ्वर्थविषयकत्वं दुरपह्नवमितिवाच्यम् , यतोवह्निमानित्यनुमितेरनुव्यवसायस्य वह्निमनुमिनोमीत्याकारकतैव नतु महानसीयवह्निमनुमिनोमीत्याकारकतेति तस्य तदवगाहिताया एवासिद्धेः । एवं महानसीयवह्नौ लाघवज्ञानसत्त्वे तदसत्त्वदशायामिव सल्लिंगकपरामर्शात्प्रमानुमिस्स्यादिति लाघवज्ञानस्य प्रमानुमितिप्रतिबंधकत्व मुभयमतएवावश्यकम् । तत्रचोपाध्यायमते वह्नौमहानसीय वह्नौ च लाघवमिति लाघवज्ञानदशायां पर्वतेपर्वतीय वह्न्यनुमितिनिर्वाहाय बाधितार्थविषयक लाघवज्ञानप्रतिबंधकतायाम बाधितार्थक लाघवज्ञानस्योत्तेजकतावाच्या। तथाच पर्वतचत्वरादिविशेष्यक पर्वतीयचत्वरीयवह्न्यादिविषयकानुमितित्वेन प्रतिबध्यत्वं पर्वतीय चत्वरीय वह्न्यादिधर्मिक लाघवज्ञानविरहविशिष्टमहानसीय वह्न्यादिधर्मिक लाघवज्ञानत्वेन प्रतिबन्धकत्व मुपेयमित्येकैकस्य लाघवज्ञानस्य पक्षभेदेनानन्त्यं । नव्यमते च वह्नित्व पर्याप्तविधेय तावच्छेदकताकानुमितित्वं बाधितवह्न्यादिधर्मिक लाघवज्ञानस्य प्रतिबध्यतावच्छेदकं, पर्वतीयवह्नौ लाघवमितिलाघवज्ञानात् पर्वतादौ पर्वतीयवह्नित्वेनैवानुमित्युत्पादात , तस्याश्च शुद्धवह्नित्वावच्छिन्नाविषयकतया लाघवज्ञानस्योत्तेजकत्वमन्तरेणैव निर्वाहइति न पक्षभेदेन प्रतिबन्धकताभेदः । वह्नित्वादौ विधेयतावच्छेदकता पर्याप्तिनिवेशश्चोपाध्यायमतेप्यावश्यकः, अन्यथा पर्वतीय वह्निव्याप्यवानयं पर्वतइत्यादि

परामर्शान्महानसीयवह्नौ लाघवज्ञानदशायां पर्वतादौ पर्वतीय वह्नित्वादिना पर्वतीयवह्न्यनुमितेरनिर्वाहात् । अथ पर्वतादौ महानसीयवह्न्यादे र्बाधग्रहदशायां तद्धर्मिकलाघवज्ञानसत्त्वेपि तत्र पर्वतीयवह्न्यादे रेवानुमिति र्नव्यमतइति तादृशबाधग्रहस्य लाघवज्ञानप्रतिबन्धकताया मुत्तेजकत्वमावश्यकं, तथाच पर्वतादौ महानसीयवह्नि र्बाधग्रहे प्युक्तलाघवज्ञानस्यसत्त्वे चत्वरादौ चत्वरीय वह्न्यनुमित्यनुदयात् तत्तद्धर्मिकवह्न्याद्यनुमितौ तत्तद्धर्मिकमहानसीय वह्निबाधग्रहमुत्तेजकीकृत्यपक्षभेदेन लाघवज्ञानस्यापि भिन्नप्रतिबन्धकताकल्पनं नव्यानामप्यावश्यकमितिचेत ? सत्यं । एवमपि पर्वतादिविशेष्यक शुद्धवह्नित्वावच्छिन्न वह्निविधेयताकानुमितित्वं बाधितवह्निधर्मिकलाघवज्ञान प्रतिबध्यतावच्छेदकं नव्यमते, उपाध्यायमतेच पर्वतादिधर्मिक शुद्धवह्नित्वावच्छिन्न पर्वतीयवह्न्याद्यनुमितित्वं, अन्यथा पर्वतादौ महानसीय वह्न्याद्यनुमितेरपि तद्धर्मिकलाघवज्ञानादनुपपत्तिरिति प्रतिबध्यतावच्छेदकलाघवान्नव्यमतमेवसाधीयः । नच – महानसीयवह्न्यादिधर्मिकलाघवज्ञानप्रतिबन्धकतायां तद्वत्ताज्ञानप्रतिबन्धकबाध तदभावव्याप्यवत्ताज्ञान तदभावावच्छेदकधर्मदर्शनाना मनेकेषां नव्यमते उत्तेजकतयागौरवं, उपाध्यायमतेच पर्वतीयवह्न्यादिधर्मिकलाघवज्ञानमात्रस्योत्तेजकत्वात् तादृशबाधादिग्रहदशायामपि पर्वतादौ महानसीयवह्न्यादे रेव वह्नित्वादिना भानसम्भवेन पर्वतीयवह्न्यादे स्तत्रभानानुपगमेन तादृशबाधादिबुद्धेरनुत्तेजकत्वमिति लाघवमिति वाच्यम् ; बाधादिबुद्धीनां महानसीयवह्न्यादिमत्ताग्रह विरोधित्वेनानुगमय्य उत्तेजकत्वसंभवा न्नव्यमतेपि तस्य पृथगुत्तेजकत्वविरहात् । उपाध्यायमते पर्वतीयवह्न्यादिधर्मिक लाघवज्ञानादे र्यत्रोत्तेजकता तत्रपर्वतीयान्य वह्न्यभाववानिति बाधादिबुद्धे रपि तद्दशायां पर्वतीयवह्न्यादिभान निर्वाहायोत्तेजकताया वाच्यतयागौरवाच्च । लाघवज्ञानप्रतिबंधकतायां बाधविशेषस्योत्तेजकत्वानुपगमे लब्ध्वर्थ बाधग्रहदशायां लाघवज्ञानसत्त्वे अनुमितिरेवनस्यात् , प्रमायाभ्रमस्य च प्रतिबंधकसत्त्वादिति बाधग्रहाभाववैशिष्ट्यं प्रतिबन्धकेनिवेश्यम् । बाध

[दी] तथा सामान्यतो दृष्टात्तदितरप्रसिद्धाशेषविशेषबाधसहकृतात् शिष्य माणप्रसिद्धप्रकारिकानुमिति र्जायते । यथा भोजनसाध्यकपीनत्वा द्दिवा सन्ध्याभोजनबाधे रात्रिभोजनप्रकारिका । एवं द्रव्यवृत्तित्वसा ध्यक गुणत्वादि च्छायां दिगंत द्रव्यवृत्तित्वबाधे, प्रसिद्धमनोवृत्ति

---

[ग] ग्रहश्चविरोधिग्रहमात्रोपलक्षणम् । तेषांच महानसीयवह्नयादिमत्ताग्रह विरोधित्वेनैकाभावः प्रातिस्विकरूपेणाभावकूटोवा निविशतामित्यन्यदे तत् । प्रतिबध्यतावच्छेदकंच न यथार्थवह्न्यनुमितित्वं, यथार्थत्वस्य तद्वति तत्प्रकारकत्वस्य तत्तद्वह्निव्यक्तिभेदेनाभिन्नत्वात । नापिवह्न्यन्तरानु मितित्वंम्, वह्निद्वयलाघवज्ञानसत्त्वे परस्परप्रतिबंधेनानुमित्युच्छेदप्र संगात् , एकलाघवज्ञाने अपरलाघवज्ञानानुत्तेजकत्वेगौरवात् । किन्तु शुद्धवह्नित्वावच्छिन्न विधेयताकानुमितित्वमेव । अतोमहान सीयत्वादिभानसिद्धिरितिदिक् ।

इतरबाधस्य सामान्यतोदृष्टस्यापि व्यापकतानवच्छेदक प्रका रकानुमितिजनकताया मुत्तेजकत्वात तज्जन्यविशेषधर्म प्रकार कानुमिति विरोधितयापि बाधस्य हेत्वाभासत्वं व्यवस्थापयति ( तथेति ) "सामान्यतोदृष्टात्" - सामान्यधर्मावच्छिन्न व्याप्यव त्ताज्ञानात ( तदितर प्रसिद्धाशेषविशेष बाधसहकृतादिति ) यद्यद्विशेषरूपावच्छिन्न सामान्यं नप्रसिद्धं तदेकतर रूपभिन्नापर सकल रूपावच्छिन्नस्य बाधसहकृतादित्यर्थः ( शिष्यमाणप्रसि द्धप्रकारिकेति ) यद्विशेषरूपावच्छिन्नस्य बाधोनगृहीतः तद्धर्मावच्छिन्न प्रसिद्धप्रकारिकेत्यर्थः । तदानीमप्रतीतस्यात्मवृत्तित्वस्य बाधाग्रहेपि दिगन्तद्रव्यवृत्तित्वस्य बाधग्रहेऽपि विशेषतो मनोवृत्तित्वानु मित्युत्पत्त्यासहकारिशरीरे प्रसिद्धिनिवेशः । संध्याभोजनप्रसिद्धिदशायां दिवाभोजनमात्रबाधग्रहात् विशेषतोरात्रिभोजनस्य पीनत्वेनान्यथा सिद्ध्यासाकल्यनिवेशः । अज्ञातसुरभिगंधस्य सुरभिविजातीय गंधबाध

ग्रहात् पृथिवीत्वेन सुरभिगन्धत्वावच्छिन्न प्रकारकानुमित्यनुत्पत्त्याप्रसिद्धे स्सहकारिताळाभाय शिष्यमाणेप्रसिद्धिविशेषणमुपात्तम् ।

अत्रेदं बोध्यम् । यादृशसामग्रीबळात् आत्मवृत्तित्वाप्रसिद्धिस्थळे तद्बा धाग्रहेपि मनोवृत्तित्वानुमिति स्तादृशी सामग्र्यगृहीतबाधस्यात्मवृत्तित्वस्य प्रसिद्धिदशायामपि, तत्कथं तदानीं न मनोवृत्तित्वानुमितिः? नहि मनोवृत्तित्वानुमितावात्मवृत्तित्वप्रसिद्धेः प्रतिबन्धकत्वं सम्भवति, येनतत्स त्वात्सामग्रीविरहः; तथासति तद्बाधग्रहेपि मनोवृत्तित्वानुमित्यनुपपत्तेः । नच-तत्तद्विशेषबाधग्रहाभावविशिष्ट तत्तद्विशेषप्रसिद्धेः प्रतिबन्धकत्वा न्नायं दोषइतिवाच्यम् , तथासतीतरबाधग्रहहेतुताया निर्युक्तिकत्वापत्तेः, उत्तेजकतयैव तदुपयोगोपपत्तेः । यत्र विशेषान्तरमात्रस्यैव नप्रसिद्धिः तत्रोपस्थितविशेषप्रकारकानुमिते र्वारणाय विशेषान्तरप्रसिद्धेरेव हेतु तायाः कल्पनौचित्यात् । तस्मात्तद्धर्मविशेषित सामान्यधर्मावच्छिन्न विषयकानुमितौ तद्विपरीतधर्मसहित सामान्यधर्मावच्छिन्नाभावग्रहएव हेतुः । ननु विशेषधर्मान्तरसहित सामान्यधर्मावच्छिन्नाभावग्रहः । तद्विपरीतधर्मश्च तदत्यन्ताभावः, तद्वदन्यत्वञ्च । अत्यन्तान्योन्याभावयो श्च विपरीतौ प्रतियोगिप्रतियोगितावच्छेदकौ । अभावग्रहे प्रतियोगि तावच्छेदक सामान्यघटितविशेष धर्मप्रकारेण भासमाने प्रतियोगिनि निरुक्तयद्धर्मविपरीतधर्मस्य यादृशं विशेषणत्वं तादृशमेवचानुमितौ त द्धर्मस्य सामान्यधर्मावच्छिन्नविशेषणत्वं । महानसीय वह्निभिन्नवह्न्य भाववानित्यत्र बाधग्रहे महानसीयत्व विपरीतस्य महानसीयान्यत्वस्य प्रतियोगिनि साक्षाद्विशेषणतेति साक्षान्महानसीयत्व विशेषितस्य व ह्नित्वावच्छिन्नस्य महानसीयवह्निमानित्यनुमितौ भानं । विशेष्याभावा न्य विशिष्टाभाववद्वृत्तित्वादि बाधग्रहे विशेष्याभावान्यत्वादेः वृत्त्यादि विशेषणकोटिप्रविष्टे अभावादौ विशेषणत्वमिति तदधीनविशिष्टव्यभि चाराद्यनुमितावपि तादृशाभावादौ विशेष्याभावत्वादि सामान्यधर्मस्य विशेषणतयाभाना द्विशेष्यव्यभिचारादिसिद्धिः । तथाच – नायं रात्रिभि

अकाळभोजी, इच्छानमनोभिन्नद्रव्याश्रितति सामान्याभावावगाहि बाध ग्रहदशायामेव पीनत्वगुणत्वादिना रात्रिभोजनमनोरूपद्रव्यवृत्तित्वादि प्रकारिकानुमितिः । दिवानभुङ्क्ते न सन्ध्यायां भुङ्क्ते - नपृथिवीवृत्तिः न जळवृत्तिरित्यादि विशेषाभाव कूटग्रहश्च सामान्याभाव ग्राहकतयैवोप युज्यतइति ।

यद्यप्येकविशेषाभावग्रहस्थळे तद्विशिष्टसामान्यसाधकहेतुतएव विशेषान्तरप्रकारिकासिद्धिरपिसम्भवति, तथापि यत्र तद्विशिष्टसामान्य साधकहेतौ विशेषान्तरव्याप्तिग्रहो प्रामाणिकस्तत्र तत्सिद्ध्यर्थमीदृश सामग्र्यन्तरकथनम् । नच - तत्रापि फलानुरोधात् तादृशग्रहकल्प नमेवोचितमितिवाच्यम् , यत्रपूर्वं हेत्वाद्यनुपस्थित्या व्याप्तिग्रहाबाधित स्तत्र तत्कल्पनस्यासम्भवात् । नच - विशेषणविशेष्ययो रुपस्थितौ मानसविशिष्टोपस्थितिसंभवात् कालविळम्बेनव्याप्त्यादिग्रहः अनुमि तिश्च शक्यते कल्पयितुं, यत्रचव्याप्त्याद्यग्रहः प्रमाणान्तरसिद्धस्तत्र फळमेवापळपनीयमितिवाच्यं, यत्रधूमत्वादिकमनुपस्थितं अथचशब्दादि ना वह्निव्याप्यमहानसीयान्य वह्न्यभावोभयत्वादिना महानसीयवह्न्यादि व्याप्तिविशिष्टस्य पक्षधर्मताग्रहः तत्रसर्वमतसिद्धमहानसीय वह्न्या द्यनुमित्यर्थं तादृशव्याप्त्यादिज्ञानस्य तादृशानुमितिसामग्रीत्व मक ल्पयित्वा महानसीयान्य वह्न्यभावादिग्रह सहकृतवह्न्यादि व्याप्य वत्ताज्ञानस्यैव तादृशानुमितिसामग्रीत्व कल्पनादेवोपपत्तेः फळाप ळापादे रन्याय्यत्वादिति ।

यथाविशेषान्तरबाधग्रहसहकृता सामान्यज्ञानसाग्री व्यापकता नवच्छेदकविशेषधर्मप्रकारेण व्यापकानुमितिं जनयति तथासामान्य ज्ञानसहकृता विशेषान्तरबाधग्रहसामग्र्यपि विशेषधर्मप्रकारेणा व्या पकमप्यनुमापयति, स्थलद्वयेपि विशेषधर्मप्रकारक संशयानु त्पाद स्यानु भाविकत्वात् । तथाविधसामग्र्याः तादृशानुमिति जनकत्वोपगमे वह्निमहानसीयान्य वह्न्यभावव्याप्योभयलिंगक महानसीय वह्नित्वावच्छिन्न

[दी॰] त्वानुमिति र्जायमाना मनोवृत्तित्वाभावप्रमयाबाध्यतइति विशेषबाधो दोषः । 'किन्तु साध्ये' त्यादिकमापाततः । वस्तुतस्तु प्रतियोग्यसमानाधिकरण संबन्धविशेषावच्छिन्न प्रतियोगिताक साध्याभाववद्गामित्वं व्यभिचारः । स्वप्रागभावेनेत्या दिकं स्पष्टत्वेनोक्तम् । तन्नतदानीं

---

[ग] साध्यकपरामर्शस्य महानसीयवह्नित्वावच्छिन्न विधेयताकानुमितौ हेतुत्वान्तराकल्पनाञ्चेति मतमवलंब्यमणिकृता पुरोवर्तिविशेष्यक वह्नित्व प्रकारकज्ञानत्वावच्छिन्ने वह्नित्वाभाववतिवह्नित्व प्रकारकत्वाभावानुमानात् वह्नित्ववति वह्नित्वप्रकारकत्व रूपप्रामाण्यसिद्धि रंगीकृतेत्यवधेयम् ।

व्यभिचारशरीरेत्यन्ताभावत्वेना भावानिवेशेप्यावश्यक प्रतियोगिवैयधिकरण्यादि विशेषणेन ध्वंसप्रागभाववारणात् " किन्तुसाध्यात्यन्ताभाववद्गामित्व " मिति मूलमसंगतमित्यभिसंधायाह ( किन्तुसाध्येत्यादिकमापाततइति ) प्रतियोग्यसामानाधिकरण्यविशेषणेनैव साध्यतावच्छेदक संबंधाद्यवच्छिन्नत्वविशेषणेनापि ध्वंसप्रागभावादिव्यावृत्तिस्संभवति, ध्वंसप्रागभावयो रत्यन्ताभाव विरोधित्वमतेपि तयोर्धर्मविशेषसंबंधविशेषावच्छिन्न प्रतियोगिताकत्वे मानाभावादिति दर्शयितुं साध्याभावे प्रतियोग्यसामानाधिकरण्यमिव संबंन्धविशेषावच्छिन्न धर्मविशेषावच्छिन्न प्रतियोगिताकत्वमपि विशेषणंदर्शितम् । स्वध्वंस प्रागभावावच्छिन्नस्य स्वाश्रयस्य च सामयिक स्वात्यन्ताभावावच्छिन्नत्वसत्वात अत्यन्ताभावं परित्यज्य ध्वंसप्रागभावोपादानमयुक्तमित्याशंक्याह ( स्वप्रागभावेत्यादिकमिति ) ( स्पष्टत्वेनेति ) तयोः प्रतियोग्यधिकरण वृत्तितायाः सर्वमतसिद्धत्वादितिभावः । उत्पत्त्यादिकाले घटादौ गन्धात्यन्ताभावासत्त्वे तद्गंधत्वादिना साध्यतायां प्रागभावादिकमादाय बाधसमर्थनेपि रूपत्वगन्धत्वादिना सामान्यधर्मपुरस्कारेण साध्यतायां नबाधनिर्वाहइति प्रागभावादिमत्यत्यन्ताभाव

[म] प्रसिद्धाभाववति पक्षेऽव्यभिचारान्न तत्सिद्धिरितिचेत् ? तर्ह्यसत्प्र सिद्धाभाववति सपक्षेऽव्यभिचारात् तमपि नसाधयेत् । तदज्ञाना त्तत्सा धनेनुमितिरप्रमास्यात । अथ पक्षवृत्तेरन्यएव धूमादिः सपक्षे, तर्हि गोत्वपृथिवीत्वद्रव्यत्वादे रप्रसिद्ध सास्नानुमानं नस्यात , सास्नादिप्रत्येक व्यभिचारात् । यदि च साध्यतावच्छेदक सास्नात्वादि सामान्यावच्छिन्न प्रतियोगिताकाभाववति न गोत्वादिकमिति न व्यभिचारः, तर्हि धूमेप्येवं व्यभिचाराभावात साध्यतावच्छेदकेन प्रकारेणाप्रसिद्धमिव प्रसिद्धमपिसा ध्यं धूमगोत्वादिकं साधयेत् यदि बाधो नदोषइति वयम् । साध्याभावव न्मात्र सहचारो न व्यभिचारः, साध्यप्रागभावध्वंसवद्वृत्तित्वेन व्यभिचा रितया पृथिवीत्वादिना गन्धादेर्द्रव्यत्वादिना गुणस्यानुमानभंग प्रसंगात् । किन्तु साध्यात्यन्ताभाववद्गामित्वम् । एवं च स प्रागभाव प्रध्वंसावच्छिन्न तदाश्रये तत्प्रतियोगिसाधने पक्षेऽव्यभिचारोनेति बाधो

---

[दी] तदत्यंताभावस्यापि व्युत्पादितत्वात । अतएवोत्पत्तिकालावच्छिन्ने घटे पृथिवीत्वादिना रूपादिसाधने बाधो निराबाधं पद मादधाति ।

---

**स्वीकारआवश्यकइत्याह (अतएवेति) "अतएव" - ध्वंसप्रागभा वसमयेत्यन्ताभावसत्त्वादेव । अन्यथारूपादि सामान्याभावज्ञानस्यैव स्वतो रूपत्वावच्छिन्नज्ञानविरोधितया ध्वंस प्रागभावयोः बाधत्वासंभवेन उक्तस्थलेबाधानवकाशात् उपष्टंभासंगतिः । नहिसाध्य प्रतियोगिकाभाव मात्रज्ञानमेव साक्षात्साध्यतावच्छेदकावच्छिन्न साध्यधीप्रतिबंधकं; तत्तत्साध्यव्यक्त्यभावज्ञानस्यापि साध्यसामान्यधीप्रतिबंधकतापत्तेः । किन्तु साध्यतावच्छेदकावच्छिन्नाभावज्ञानमेव । नहिध्वंस प्रागभावयोः सामान्यधर्मावच्छिन्न साध्यकस्थलेतथात्वं, सामान्यधर्मस्य तत्प्रति योगितानवच्छेदकत्वादिति ।**

[म] दूषणं । अथावच्छेद्ये सिद्धसाधनं, अवच्छेदके हेत्वसिद्धिः, विशिष्टंच नान्यदिति चेत्? तर्हि प्रागभाव प्रध्वंसप्रतियोगिनो रेकवृत्तित्वे नैकसमयतापिस्यात् । अथ यत्समयावच्छेदेन तत्र प्रागभावः प्रध्वंसोवा नतत्समयावच्छेदेन प्रतियोगीतिचेत्? तर्हि तदवच्छेदेन प्रतियोगि साधने न सिद्धसाधनं, किन्तु बाधएव ।

---

[ग] मूले (अवच्छेद्येसिद्धसाधनमिति) विशिष्टघटके विशेष्यघटादौ साध्यसाधने, सिद्धस्याबाधितस्यैव, साधनं, प्रमारूपैवानुमितिरिति यावत् । तथाचतत्रबाधोनदोषइतिभावः । "अवच्छेदके"-ध्वंस प्रागभावादि रूपविशिष्टघटकविशेषणे । "हेत्वसिद्धिः" - पृथिवीत्वादिरूपहेतोरसिद्धिः । ननु - विशेष्यविशेषणपक्षके असंकीर्णं बाधासंभवेपि विशिष्टपक्षकेतस्य निष्प्रत्यूहतेत्यतआह (विशिष्टंचेति) (नान्यादिति) विशेषणविशेष्याभ्यामितिशेषः । गंधादौ गंधप्रागभावाद्युपलक्षित घटादिवृत्तित्वसत्त्वेपि न तद्विशिष्टघटादिवृत्तित्वम् । नहितद्वृत्तितयैवैकसमयावच्छिन्न तद्वृत्तित्वरूपं तद्विशिष्टवृत्तित्वं निर्वहति, तथासति प्रतियोगिनो ध्वंसप्रागभावादिमद्वृत्तितया एकसमयावच्छिन्न तत्सामानाधिकरण्यमपि स्यादिति विरोधोभज्येत । यद्वि ध्वंसप्रागभावयोः प्रतियोगिनश्चैकाधिकरणवृत्तौ एकस्समयोनावच्छेदक इत्येकसमयावच्छेदेनैकत्रावर्तमानत्वरूप विरोध स्तदापक्षतावच्छेदकध्वंसादिसमयावच्छिन्न तद्वृत्तित्वरूप तद्विशिष्टवृत्तित्वं प्रतियोगिन्यवगाहमानानुमिति र्बाधितविषयैवेति तादृशानुमिति विरोधी तदवच्छेदेन प्रतियोगिनोबाधो संकीर्णः तत्रदोषएव, पृथिवीत्वादिहेतौ तद्विशिष्टवृत्तित्वासिद्धिविरहादितिसमाधत्ते (तर्हीत्यादिना) अधिकरणैक्ये

[म] अन्यथाभावात्यन्ताभावयो रव्यव्याप्यवृत्तित्वभंगः, एकवृत्तित्वात्। अवच्छेदकभेदेन वृत्तिरिहापि। तत्र देशभेदोवच्छेदको त्रतु समयभेदइति।

**इति श्रीगंगेशोपाध्याय विरचिते तत्वचिन्तामणावनुमानखण्डे**

बाधग्रन्थः।

---

[दी] एवं साध्यवत्वानवच्छेदकदेशावच्छिन्नस्य पक्षत्वेपि बाधोबोध्यः। अथ पक्षतावच्छेदकावच्छेदेन साध्यसिद्धौ तदवच्छेदेन हेतुमत्ताज्ञानं प्रयोजकम्, अन्यथागृहीत भागासिद्धे घटत्वादेरपि पृथिवीत्वा द्यवच्छेदेन रूपादिसिद्धि प्रसंगात; नच शिखराग्रवच्छेदेन धूमा

---

**[ग] नावच्छेदकैक्ये बाधकान्तरमाह (अन्यथेति) (अवच्छेदकभेदेनवृत्तिरिति) एकस्मिन्नधिकरणे विभिन्नावच्छेदेन वृत्तिरित्यर्थः।**

**दीधितौ (साध्यवत्त्वानवच्छेदकेत्यादि) वह्निमत्तानवच्छेदक शिखरावच्छेदेन पर्वते धूमादिनावह्न्यादिसाधनेपीत्यर्थः। तत्र पक्षताव च्छेदकाशिखराद्यवच्छिन्ने धूमादिमत्त्वस्य तदवच्छेदेन वह्न्याद्यनुमिति जनकज्ञानविषयस्यासत्त्वा द्धेत्वसिद्धिरिति कुतोबाधस्यासंकीर्णता, पक्षतावच्छेदकसामानाधिकरण्यमात्रेण हेतुमत्ताज्ञानस्यावच्छेदकावच्छे देनानुमिति जनकत्वे भागासिद्धे रदोषता प्रसंगादितिशंकते (अथे त्यादिना) घटत्वादेरितिपञ्चमी (पृथिवीत्वावच्छेदेन रूपादिसिद्धिप्रसंगा दिति) पृथिवीत्वसामानाधिकरण्यमात्रेण पटादौ घटत्वाद्यभावरूप भागासिद्धिग्रहेपि तत्सामानाधिकरण्यमात्रेण तद्वत्ताग्रहसम्भवादिति भावः। भागासिद्धेर्दोषत्वानुरोधेन पक्षतावच्छेदक पृथिवीत्वाद्यंशे साध्यस्यानतिरिक्तवृत्तित्व रूपावच्छेदकत्वावगाह्यनुमितौ तत्रहेतोस्ता दृशावच्छेदकत्वावगाहिपरामर्शत्वेन हेतुत्वमास्तां, पक्षतावच्छेदकदेश**

[दी] दिमत्त्वमितिचेन्न;–अवच्छेदकत्वयो र्वस्तुनोर्भेदात् । शाब्दसामा न्यस्या किञ्चित्करत्वात् । अवच्छिन्ना वृत्तेरपि च हेतोस्तत्त्वेन गृही ताज्जायमानानुमितिं विरुणद्धिबाधप्रमा । संकरेपि वस्तुनो ज्ञानासंक रात् । सुखाद्यनवच्छेदक शरीराद्यवच्छिन्नात्मादौ सुखादिसाध्यक

---

[ग] कालयो स्स्वरूपसम्बन्धरूपावच्छेदकत्वावगाहिन्यामनुमितौन्न नतादृ शावच्छेदकत्वावगाहि परामर्शत्वेन, तदवच्छेदेनबाधबुद्ध्यादि रूपप्र तिबंधकाभावसहित सामानाधिकरण्य मात्रविषयकानुमितिसामग्रीतः तादृशानुमितिस्वीकारे क्षतिविरहात्; अवच्छेदकत्वपदार्थयोर्भेदेनैकस्य बाधाभावमात्रात् भानेप्यन्यस्य भानेधिकापेक्षायां बाधकाभावादितिस माधत्ते (अवच्छेदकत्वयोरिति) शिखरावच्छेदेनवह्न्यनुमितौ तदवच्छे देन हेतुमत्ताज्ञानस्य हेतुत्वमभ्युपेत्यापि तत्रबाधस्यदोषतां व्यवस्था पयति (अवच्छिन्नावृत्तेरिति) शिखराद्यवच्छेदेन धूमाद्यसत्त्वेपि तद वच्छिन्नत्वेनभ्रमविषयीभूतधूमादित स्तदवच्छेदेन वह्न्यनुमित्युत्पत्तिं बाध प्रमैव विरुणद्धीति बाधो दोषइत्यर्थः । बाधबुद्धेः प्रमात्वाभिधानं तद्वि षय दोषप्रसिद्धिं सूचयितुम् । तथापि तत्रापि स्वरूपसदाद्यसिद्धि संक रएवेत्याशंक्य तत्संकरस्या किञ्चित्करत्वमाह (सकरेपीति) (ज्ञाना संकरादिति) असिद्ध्यज्ञानदशायां बाधज्ञानस्यैवानुमित्यनुत्पाद प्रयो जकत्वादित्यर्थः । वस्त्वसंकरस्थलमप्याह (सुखाद्यनवच्छेदकेति) सुखाद्यनवच्छेदकं यन्नारकीयशरीरादिकं शरीरव्यक्तिविशेषादिकं वापक्षतावच्छेदकं तदवच्छेदेनात्मादिरूपपक्षे समवायेन सुखादिरूप साध्यव्याप्यस्य दुःखादिरूपहेतोर्विद्यमानत्वादित्यर्थः । तथाच तादृश हेतोरसिद्धिविरहात् पक्षतावच्छेदकशरीरविशेषाद्यवच्छेदेन साध्याभा वोऽसिद्ध्याद्यसंकीर्णोबाधइतिभावः । व्याप्यवृत्तेस्सर्वावयवावच्छेदेन वृत्तिमत्त्वे मूलावच्छिन्न वृक्षः कपिसंयोगी एतद्वृक्षत्वादित्यादावपि मूला

[दी] दुःखादेर्वर्तमानत्वात् । कपिसंयोगानवच्छेदक मूलाद्यवच्छिन्नकपि संयोगादि साध्यकवृक्षविशेषत्वादे र्वर्तमानत्वाच्च । अत्रचैतत्कालावच्छिन्नः पर्वतोवह्निमानिति शब्दादिव एतत्कालावच्छिन्न पर्वतपक्षक धूमादेरप्येत त्कालावच्छेदेन वह्निमत्ताबुद्धि रनुभवसिद्धा नापह्नवमर्हतीत्यभिप्रायः ।

इतिदीधितौ बाधविवरणम् ।

---

[ग] वच्छिन्नवृत्तिकपिसंयोगाद्यभावादिरूप बाधस्या संकरइत्याह(कपीति) ननु-सर्वत्रानुमितौ साध्ये पक्षतावच्छेदकसामानाधिकरण्यमेवभासते पक्षताधर्मताबलात् , व्याप्यस्यहेतोः पक्षतावच्छेदकसामानाधिकरण्यरूप पक्षधर्मतायाव्यापकस्य साध्यस्य पक्षतावच्छेदकसामानाधिकरण्यंविना नुपपद्यमानत्वात् । नतु पक्षतावच्छेदकावच्छिन्नत्वमपि, साध्यस्यतद वच्छिन्नत्वं विनापिहेतोः पक्षधर्मत्वोपपत्तेः तद्बलविरहात् ; बाधाभाव बलात्तद्भानेप्यदप्यबाधितं साध्यादौ किन्नभासते; अथ व्याप्यस्य पक्ष तावच्छेदकव्यापकत्वरूपं तदवच्छिन्नत्वं साध्यस्य तादृशतदवच्छिन्न-त्वमन्तरेण नोपपद्यतइति. तदवगाहिनः परामर्शात्साध्ये पक्षतावच्छेद कव्यापकत्वरूप तदवच्छिन्नत्वावगाहिन्यनुमिति र्युक्तैव, अतएवभागा सिद्धे र्दोषत्वमपीतिचेत ? भवतु तादृशपरामर्शा त्तादृशपक्षतावच्छे दकावच्छेदेनानुमितिः ; नच तावतासंकीर्णबाधसौलभ्यं, हेतोः पक्ष तावच्छेदकधर्मव्यापकत्वेबाधासम्भवात् ; एवं यत्रयदवच्छेदेन हेतु स्तत्र तदवच्छेदेन साध्यमितिव्याप्तौ गृहीतायां देशकालरूपपक्षताव च्छेदकावच्छेदेन हेतुमत्ताज्ञानात्तदवच्छेदेन साध्यानुमितिस्स्यादेव, ता दृशव्याप्तिमतोहेतोः पक्षतावच्छेदकदेशकालावच्छेदेन सत्तायां स्तद वच्छेदेन साध्यवत्त्वमन्तरेणानुपपत्ते स्तद्भासकपक्षधर्मताबलसंपत्तेरित्ये तावतापि नबाधासंकरसौलभ्यं, साध्यानवच्छेदक देशकालाद्यवच्छि न्नवृत्तिविशिष्टहेतौ दर्शिताया अवच्छेदकान्तर्भावेन व्याप्ते रसिद्धेरित्यु पाध्यायानुयायिनामाक्षेपमनुभवावलम्बेन परिहरति ( अत्रचेति ) " श ब्दादिवे " त्युक्तं दृष्टान्ताभिधानं अनुभवदार्ढ्याय ।

इदन्तु बोध्यम् - यादृशव्याप्तिज्ञाना त्पक्षतावच्छेदक साध्ययोः केवलमेकत्रद्वयमितिरीत्या वैशिष्ट्यविषयिणी प्रमानुमितिः, तत्प्रमात एवचेद्बाधविशेषाभाव सहकृता त्पक्षतावच्छेदक कालादिविशिष्टानु योगिकसाध्यवैशिष्ट्यविषयिणी भ्रमानुमितिर्भवे त्तदा गुणादौ द्रव्यवृत्ति त्वोपलक्षितसत्तादि वैशिष्ट्यविषयकानुमित्यौपयिक जात्यादिलिंगक प्रतियोगित्तावच्छेदकावच्छिन्नत्वा विशेषित प्रतियोगिवैयधिकरण्यघ टितव्याप्तिप्रमातः अत्रापि बाधावतारे तद्विशिष्ट वैशिष्ट्य विषयीणी भ्रमानुमितिरपि तुल्ययुक्त्यायुज्यतं इति व्याप्तौ प्रतियोगितावच्छेदकाव च्छिन्न प्रतियोगि वैयधिकरण्य मनर्थकं स्यादितिदिक् ।

इति श्रीमहामहोपाध्याय गदाधरभट्टाचार्य विरचिता
बाधदीधितिटिप्पणी सम्पूर्णा ।

